मां·भाटी· १

ॐश्रीगणेशाय नमः आगमप्राधान्येनाद्वैतं प्रतिपादयतां तन्त्रवृत्तीकस्याद्वैतस्य मिथ्यात्वमर्थादुक्तमिदानीं तन्मिथ्यात्वमुपपत्ति प्राधान्येनापि प्रतिपत्तुं शक्यमिति दर्शयितुं प्रकरणान्तरमवतारयन्नादौ दृष्टान्तसिध्यर्थं तस्मिन् हेतुं संमतिमाह वैतथ्यमिति न केवलमागमोक्तिवशादेवास्य प्रमिथ्यात्वं किं तु युक्तितोपीत्याह अन्तःस्थानादिति पूर्वोत्तरप्रकरणयोः संबंधसिध्यर्थं पूर्वप्रकरणोवृत्तं संक्षिप्यानुवदति ज्ञाते द्वैत इति आदिशब्देन यत्र हि द्वैतमिव भवतीत्याद्याः श्रुतिर्गृह्यते तर्हि द्वैतमिथ्यात्वस्य प्रागेव सिद्धत्वादुत्तरप्रकरणमनर्थकमित्याशंक्याह आगमेति यत् द्वैतमिथ्यात्वमेवमुक्तं तदागममात्रमागमप्राधान्येनाधिगतं न युक्तितः सिद्धं

ज्ञाते द्वैतं न विद्यत इत्युक्तं एकमेवाद्वितीयमित्यादिश्रुतिभ्यः। आगममात्रं तत्तत्रोपपत्त्यापि द्वैतस्य वैतथ्यं शक्यतेऽवधारयितुमिति द्वितीयप्रकरणमारभ्यते वितथस्य भावो वैतथ्यमसत्यत्वमित्यर्थः कस्य सर्वेषां बाह्यानामाध्यात्मिकानां भावानां पदार्थानां स्वप्न उपलभ्यमानानामाहुः कथयन्ति मनीषिणः प्रमाणकुशलाः वैतथ्ये हेतुमाह अन्तःस्थानादिति अन्तः शरीरस्य

वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः। अन्तःस्थानात्तु भावानां संवृतत्वेन हेतुना॥१॥

मध्ये स्थानं येषां तत्र हि भावा उपलभ्यन्ते पर्वतहस्त्यादयो न बहिः शरीरात्तस्मात्ते वितथा भवितुमर्हन्तीति ननु अपवरकादिष्वन्तरुपलभ्यमानैर्घटादिभिरनैकान्तिको हेतुरित्याशंक्याह संवृतत्वेन हेतुनेति अन्तः संवृतस्थानादित्यर्थः न ह्यन्तः संवृते दे॥ हेऽन्तर्नाडीषु पर्वतहस्त्यादीनां संभवोऽस्ति न हि देहे पर्वतोऽस्ति १

तस्मिन्नागमेनावगते युक्तिप्राधान्येनापि तन्मिथ्यात्वमवगंतव्यमिति प्रकरणान्तरं आरभ्यमित्यर्थः प्रमाणानुग्राहकतर्कानुग्राह्यप्रमाणस्य प्रधानत्वात्तदधीनविचारानंतरं तर्काधीनविचारस्य सावकाशत्वाद्युक्तं पौर्वापर्यं पूर्वोत्तरप्रकरणयोरित्युक्तं संप्रति श्लोकाक्षराणि योजयति वितथस्येत्यादिना बाह्या घटादयः स्तनादयस्त्वाध्यात्मिका भावाः शरीरान्तरवस्थानं स्वाप्नानां भावानामित्यत्रानुभवं प्रमाणयति तत्र हीति तेषामन्तरुपलभ्यमानत्वेऽपि न वैतथ्यं

रा० १

 सर्वोपिस्वप्नद्रष्टादेशांतरे स्वप्नान्पश्यन्नकस्मादेवप्रतिबुद्धो नतत्रास्ति किंतु शयनदेशे वर्तते न चापि गत्वा स्वप्नदर्शने का
 नुपपत्तिरित्याशंक्याह यदि चेति अंतरेव स्वप्नदर्शनमिति स्थिते स्वप्नमिथ्यात्वमुचितकालमन्यत्वादित्युक्तं प्रपंचयति
रात्राविति यद्यपि रात्रौ निद्रामुपगतस्तथापि भावानहनि पश्यन्निव तिष्ठति सुषुप्तः संस्तत्र च सूर्यादिकरणोपि पश्यति
शयानोपि पर्यटनं प्रतिपद्यते यद्यपि सहायविहीनः सुप्तस्तथापि बहुभिः सहायैः स्वप्नानुपलभते तस्मादुचितस

यदि च स्वप्ने देशांतरं गच्छेत यस्मिन्देशे स्वप्नान्पश्येत तत्रैव प्रतिबुध्येत न चैतद
स्ति रात्रौ सुप्तोऽहनीव भावान् पश्यति बहुभिः संगतो यैश्च संगतो भवति तैर्गृह्ये
त न च गृह्यते गृहीतश्चेत्त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः न चैतदस्ति
तस्मान्न देशांतरं गच्छति स्वप्ने ॥२॥

कालस्यकरणस्य सहकारिणश्चाभावेपि स्वप्नदर्शनात् तन्मिथ्यात्वसिद्धमित्यर्थः स्वप्नमिथ्यात्वे हेत्वंतरमाह यैश्चे राम०
ति सहदर्शिभिरगृह्यमाणत्वात् स्वप्नद्रष्टुरसंप्रतिपन्नमित्याशंक्याह गृहीतश्चेदिति पुरुषांतरसंवादादर्शनात् देशां २
तरप्राप्तिद्वारा स्वप्नदर्शनमिति वक्तुमशक्यत्वात् अंतरेव स्वप्नदर्शनमित्युचितदेशकालाद्यभावात् तन्मिथ्यात्वसि
द्धमित्युपसंहरति तस्मादिति ॥२॥

यद्यपि देहान्तः संकुचिते देशे स्वप्नभावा भवन्ति तथापि कथं तेषां मिथ्यात्वमित्यत आह नद्येति अन्तरित्युक्तं स्फुटयति संवृत इति तमेव सं-
कुचितदेशं विशेषणान्तरेण स्फोरयति देहान्तर्नाडीष्विति उक्तमर्थं कैमुतिकन्यायेन स्फुटयति नहीति यदा देहेऽपि पर्वतादयो न सं-
भाव्यन्ते तदा तदन्तर्वर्तिनीषु नाडीष्विति सुतरां तेषां संभावना नास्तीति किमु वक्तव्यमित्यर्थः स्वप्नभावाः सत्या न भवन्ति उचितदेशा-
भावत्वाद्रज्जुसर्पादिवदिति भावः ॥ १ ॥ देहाद्बहिर्देशान्तरं गत्वा स्वप्नानां भावानामुपलम्भात्तेषां देहान्तः संवृते नाडीप्रदेशे द-
र्शनमसंप्रतिपन्नमित्याशङ्क्य परिहरति अदीर्घत्वाच्चेति बहिः स्वप्नोपलब्धिपक्षे दोषान्तरमाह प्रतिबुद्धश्चेति आवश्यमाशङ्का

स्वप्नदृश्यानां भावानामन्तः संवृतस्थानमित्येतदसिद्धं यस्मात्प्राच्येषु सुप्त उदक्षु स्वप्नान्पश्यन्निव दृश्यत इत्येतदाशङ्क्याह
न देहाद्बहिर्देशान्तरं गत्वा स्वप्नान्पश्यति यस्मात्सुप्तमात्र एव देहदेशाद्योजनशतान्तरिते मासमात्रप्राप्ये देशे स्वप्नान्पश्यन्नि

अदीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति प्रतिबुद्धश्च वै सर्वस्तस्मिन्देशे न विद्यते ॥ २ ॥

व दृश्यते न च तद्देशप्राप्तेरागमनस्य च दीर्घः कालोऽस्ति अतो दीर्घत्वाच्च कालस्य न स्वप्नदृग्देशान्तरं गच्छति किं च प्रतिबु-
द्धश्च वै सर्वः स्वप्नदृक् स्वप्नदर्शनदेशे न विद्यते ॥ ॥

मन्तव्यमिति स्वप्नेति तेषां देहान्तः संकुचिते नाडीदेशे स्थितिर्दर्शनान्मिथ्यात्वमित्येतदपि न संप्रतिपन्नमित्यत्र हेतुमाह यस्मादि-
ति पश्यन्निवेति स्वप्नदर्शनस्य निरूपणे सत्याभासत्वमिवशब्देन द्योत्यते एतच्छब्देन चोद्यं परामृश्यते स्वप्नदृष्टामलत्वात्स्वप्नान्न
पश्यतीत्यत्र हेतुमाह यस्मादिति इवशब्दस्तु पूर्ववत् तथापि कथं बहिः स्वप्नोपलम्भो न भवतीति निर्दोषितमित्याशङ्क्याह नचे-
ति स्वप्नः सत्यो न भवति उचितकालविकलत्वात् संप्रतिपन्नवदित्यभिप्रेत्य फलितमाह अत इति इतश्च न देहाद्बहिर्देशान्त-

स्वप्नदर्शनमाह टीका ॥

मां·भा·टी·२ उक्तन्यायेन दृष्टान्ते सिद्धे फलितमनुमानमाह अन्तःस्थानादिति भेदानामित्यत्र सूचितमनुमानं रचयति जाग्रदिति तृतीयेन पादेन प-
२ क्षधर्मत्वमस्य हेतोरुक्तं तेन दृष्टान्तयति यथेति द्वितीयेन पादेन प्रतिकूलप्रमाणाभावसूचकं प्रतिज्ञोपसंहारवचनं निगमनं सूचित-
मित्याह तस्मादिति सर्वं द्वैतं वैतथ्यवादिनां केन विशेषणपक्षसपक्षविभागसिद्धिरित्याशङ्क्यान्तःस्थानात्तु संवृतत्वेन भिद्यते इत्य

जाग्रद्दृश्यानां भावानां वैतथ्यमिति प्रतिज्ञा दृश्यत्वादिति हेतुः स्वप्नदृश्यभाववदिति दृष्टान्तः यथा तत्र स्वप्ने दृश्यानां भावानां वैतथ्यं तथा जागरितेऽपि दृश्यत्वमविशिष्टमिति हेतूपनयः तस्माज्जागरितेऽपि वैतथ्यं स्मृतमिति निगमनं अन्तःस्थाना

अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतं यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते ॥४॥

त्संवृतत्वेन च स्वप्नदृश्यानां भावानां जाग्रद्दृश्येभ्यो भेदः दृश्यत्वमसत्यत्वं चाविशिष्टमुभयत्र ॥ ४ ॥ ॥ ॥

न विवक्षितमर्थमाह अन्तःस्थानादिति स्वप्नदृश्यानामन्तःस्थाने संवृतत्वं च न तथा जाग्रद्दृश्यानां तेनोचितदेशाद्यभावात् गाम०
तेषां तेभ्यो वैषम्यं स्फुटं सिद्धं हि योग्यदेशाद्यभावेन स्वप्नस्य मिथ्यात्वमिति तत्पक्षत्वं जागरितस्य पुनरुचितदेशादिसद्भा- ३
वादस्फुटं मिथ्यात्वमित्यर्थः तर्हि सर्वथा वैषम्यात् दृष्टान्तदार्ष्टान्तिकभावासिद्धिरित्याशङ्क्याह दृश्यत्वमिति ॥ ॥

स्वप्नदृश्यानां भावानां मिथ्यात्वे हेत्वंतरमाह अभावश्चेति न तत्र रथा न रथयोगा न पंथानो भवंतीत्यादिश्रुत्या स्वप्ने स्वयंज्योतिष्ट्वमात्मनोऽ
र्थं यस्मात्तत्र दृश्यानां रथादीनामभावो योग्यदेशाद्यभावद्योतकन्यायपुरःसरं श्रूयते अतस्तेन न्यायेन प्राप्तमेव स्वप्नदृश्यभावानां मि
थ्यात्वमन्यपरया श्रुत्या प्रकाशितमिति ब्रह्मविदो वदंतीति तथा च स्वप्ने भावानां मिथ्यात्वं श्रुतियुक्तिभ्यां सिद्धमित्यर्थः हेत्वंतरपरत्वं
श्लोकस्य दर्शयति इतश्चेति इतः शब्दार्थमेव स्फुटयति यत इति देशाभावे ज्ञानाभावादर्थात् ज्ञानस्यापि श्रुतमसत्त्वमिति वक्तुं
च शब्दः श्रूयते न तत्रेत्याद्यायां श्रुताविति संबंधः न्यायपूर्वकमिति व्याचष्टे युक्तित इति योग्य[illegible] देशाद्यभावो युक्तिं
तर्हि न्यायसिद्धेऽर्थे किमन्यपरया श्रुत्या क्रियते तत्राह तेनेति अंतःशरीरमध्ये स्थानं नाडीलक्षणं तत्रातिसूक्ष्मे संवृतत्वेन संकुचि

इतश्च स्वप्नदृश्याभावा वितथा यतोऽभावश्च रथादीनां स्वप्नदृश्यानां श्रूयते न्यायपूर्वकं युक्तितः श्रुतौ न तत्र रथा इत्यत्र

अभावश्च रथादीनां श्रूयते न्यायपूर्वकं । वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितं ॥३॥

तेनांतःस्थानसंवृतत्वादिहेतुना प्राप्तं वैतथ्यं तदनुवादिन्या श्रुत्या स्वप्ने स्वयंज्योतिष्ट्वप्रतिपादनपरया प्रकाशितमाहुर्ब्रह्मविदः ॥३॥

तत्वेनावस्थानं पर्वतादीनामुपलभ्यते तत्र श्वोचितदेशाभावो योग्यकालाभावश्चेत्यादिना प्रागुक्तेन हेतुना प्राप्तं स्वप्नदृश्यानां भावानां
वैतथ्यं तदेव तदनुवादिन्या श्रुत्यापि प्रकाशितमित्याहुर्ब्रह्मविदः । जाग्रदवस्थायामादित्यादिप्रकाशेनोपाधिना वागादिज्योतिषां च विद्यमान
त्वाद्दर्शनादिव्यवहारस्य तन्निमित्तत्वसंभवादात्मचैतन्यातिरेचनेन व्यवहारो न निर्धारयितुं शक्यते स्वप्ने पुनः सर्वोपाध्यभावेऽपि व्यव
हारदर्शनात् तस्य च निमित्तापेक्षत्वादात्मचैतन्यस्य तन्निमित्तत्वनिर्णयात् तत्रात्मनः स्वयंज्योतिष्ट्वं प्रतिपादयितुं न तत्रेत्याद्या श्रु
तिस्तथा तत्परया न्यायसिद्धं स्वप्नमिथ्यात्वमनुवदंत्या तदंत्यात् तदप्रतिपादितमपि प्रकाशितमिष्यते तथा च श्रुतियुक्तिभ्यां प्रतिपन्नं

मां·भा·टी·२
४

स्वप्नस्यमिथ्यात्वमाद्यंतवत्त्वान्नभवतिकिंतुफलपर्यंतत्वाभावाज्जागरितस्यफलपर्यंतत्वान्नमिथ्यात्वमित्याशंक्याह सप्रयोज
नतेति फलपर्यंतताराहित्योपाधेः साधनव्यापकत्वेफलितमाह तस्मादिति जाग्रद्दृश्याभावः स्वहृज्जागरत्वेनेश्लोकस्याचस्यो
मुपाध्याशंकामुत्थापयति स्वप्नेति जाग्रद्दृश्यानामिवस्वप्नदृश्यानामपितुल्यंसप्रयोजनत्वमित्युपाधिरसंभवमाशंक्याह न
त्विति अनुमानस्यसोपाधिकत्वेनासाधकत्वेफलितमाह तस्मादिति हेतोःसोपाधिकत्वंदूषयति तन्नेति साधनव्याप्त्या

स्वप्नदृश्यवज्जागरितदृश्यानामप्यसत्त्वमितियदुक्तंयस्माज्जाग्रद्दृश्यान्यन्नपानवाहनादयःक्षुत्पिपासादिनिवृत्तिंकुर्वं
तोगमनागमनादिकार्यंचसप्रयोजनादृष्टाः नतुस्वप्नदृश्यानांतदस्तितस्मात्स्वप्नदृश्यवज्जाग्रद्दृश्यानामसत्त्वंमनो
4 रथमात्रमिति तन्नकस्मात्यस्मात्सप्रयोजनतादृष्टायान्नपानादीनांसास्वप्नेविप्रतिपद्यतेजागरितेहिभुक्त्वापीत्वाचतृ

सप्रयोजनतातेषांस्वप्नेविप्रतिपद्यते तस्मादाद्यंतवत्त्वेनमिथ्यैवखलुतेस्मृताः॥७॥

प्तोविनिवर्तिततृट्सुप्तमात्रएवक्षुत्पिपासाद्यार्तमहोरात्रोषितमभुक्तवंतमात्मानंमन्यतेयथास्वप्नेभुक्त्वापीत्वाचातृ
प्तोत्थितस्तथा तस्माज्जाग्रद्दृश्यानांस्वप्नेविप्रतिपत्तिर्दृष्टातोमन्यामहेतेषामप्यसत्त्वंस्वप्नदृश्यवदनाशंकनीयमिति
तस्मादाद्यंतवत्त्वमुभयत्रसमानमितिमिथ्यैवखलुतेस्मृताः॥७॥

दिदोषाद्हेतोरुपाधिनिरसनंसशंकमित्याह कस्मादिति फलपर्यंतताविरहित्वोपाधेःसाधनव्याप्तिमाह यस्मादित्यादिना तामेवविप्र
तिपत्तिंप्रकटयति जागरितेहीति। उक्तमर्थंदृष्टांतेनस्पष्टयति यथेत्यादिना उपाधेःसाधनव्याप्तिंनिगमयति। तस्मादिति हे राम०
तोःसोपाधिकत्वाभावेफलितमाह अतइति हेतुद्वयमुपसंहरति तस्मादिति॥७॥ ॥ ॥ ४

स्वप्नवत् जागरितस्य मिथ्यात्वे स्वप्ननिद्रायुक्तावित्यादौ जागरिते स्वप्नयोगो युक्तो भवतीत्याह स्वप्नेति उभयत्रैकत्वं विद्वदभिमत
मित्यत्र हेतुमाह भेदानामिति भेदा भिद्यमाना भावास्तेषामवस्थाद्वयवर्तिनां ग्राह्यत्वं ग्राहकत्वमविशिष्टं तेन रूपत्वेन हेतुनाप्र
सिद्धमेव तेषां मिथ्यात्वेन समत्वं तेन स्थानयोरेकरूपत्वं विवेकिनामभिप्रेतमिति यत्त्वेवमनुमानात्प्रमाणसिद्धं तस्यैव फ
लं साधनस्थानद्वयाविशेषरूपमनेन श्लोकेनोक्तमिति श्लोकयोजनया दर्शयति प्रसिद्धेनैवेति ५ जाग्रद्दृश्यानां भावानां
मिथ्यात्वमित्यत्रानुमानांतरमाह आदाविति यदि जाग्रद्दृश्या भावा मिथ्यात्वेन प्रसिद्धास्स्वप्नादिभिः समत्वात्तन्मिथ्याकथन

प्रसिद्धेनैव भेदानां ग्राह्यग्राहकत्वेन हेतुना समत्वेन स्वप्नजागरितस्थानयोरेकत्वमाहुर्विवेकिन इति एवं प्रमाणसि
द्धस्यैव फलं ५ इतश्चैतन्मिथ्यात्वं जाग्रद्दृश्यानां भेदानामाद्यन्तयोरभावात् यदादावन्ते च नास्ति वस्तु मृगतृष्णिकादि तत्

स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिणः॥ भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना॥ ५ आदा
वन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा वितथैः सदृशाः सन्तो वितथा इव लक्षिताः ६ ॥ ॥

मध्येऽपि नास्तीति निश्चितं लोके तथा इमे जाग्रद्दृश्या भेदा आद्यन्तयोरभावाद्वितथैरेव मृगतृष्णिकादिभिः सदृश
त्वाद्वितथा एव तथाप्यवितथा इव लक्षिता मूढैरनात्मविद्भिः॥ ॥

हि ते बाधदृष्टः सम्यक् सत्त्विरूपमसत्त्वेन प्रतीतिरित्याशंक्याह वितथैरिति प्रकृते जाग्रन्मिथ्यात्वे हेत्वंतरपरत्वं श्लोकस्योपन्या
श्री स्यति इतश्चेति विमतं मिथ्या आदिमत्त्वादन्तवत्त्वाच्च स्वप्नादिवदित्यर्थः उक्तानुमाने दृष्टान्तव्याप्तिं कथयति यदादाविति यदादिमदं
तवच्चेतन्मिथ्या यथा मृगतृष्णिकादीत्यर्थः आदिमत्त्वः साधनस्य पक्षधर्मतोपन्यासेन प्रतिज्ञोपसंहारवचनं निगमनं दर्शयति तथे
ति अनुमानस्य प्रत्यादिषु सत्त्वग्राहकप्रमाणविरोधमाशंक्य सत् गंधर्वनगरमितिवन्नस्यापातिकसत्त्वविषयत्वान्नैवमित्या

अन्यदपि त्रिनेत्रत्वादिदृष्टांतस्य साध्यविकलत्वे सिद्धे प्रागुक्तानुमानानुपपत्तिरिति फलितमाह तस्मादिति दृष्टांतासिद्धिं हृष
यन्नानुमानं साधयति तन्नेति तत्किं स्वतः सिद्धं किं वा परतो नाद्यो जडस्य तदयोगादित्याह नतदिति द्वितीये तन्मिथ्यात्व
सिद्धिरित्यभिप्रेत्य प्रश्नपूर्वकमाद्यपादमवतारयति किं तर्हीति तद्दूतान्यक्षराण्याकरोति स्थानिन इति अपूर्वस्य
स्वप्नदर्शनस्य स्थानिधर्मत्वं दृष्टांतेन साधयति यथेत्यादिना अपूर्वदर्शनं स्वप्नद्रष्टुर्धर्मोपि चेत्तन्मयवत् किं न स्यादित्याह

5

तस्मात्स्वप्नवज्जागरितस्यासत्त्वमित्ययुक्तं तन्न स्वप्ने दृष्टमपूर्वं यन्मन्यसे न तत्स्वतः सिद्धं किं तर्हि अपूर्वमि
ति अपूर्वं स्थानिधर्मो हि स्थानिनो द्रष्टुरेव हि स्वप्नस्थानवतो धर्मः यथा स्वर्गनिवासिनामिंद्रादीनां सहस्राक्ष
त्वादि तथा स्वप्नदृशोऽपूर्वोयं धर्मः न स्वतः सिद्धो द्रष्टुः स्वरूपवत् तानेवं प्रकारानपूर्वान्स्वचित्तविकल्पान
यं स्थानी स्वप्नदृक् स्वप्नस्थानं गत्वा प्रेक्षते यथैवेह लोके सुशिक्षितः देशांतरमार्गः देशांतरमार्गः तेन मार्गे
ण देशांतरं गत्वा तान्पदार्थान्पश्यति तद्वत् तस्माद्यथा स्थानिधर्माणां रज्जुसर्पमृगतृष्णिकादीनामस
त्त्वं तथा स्वप्नदृश्यानामपूर्वाणां स्थानिधर्मत्वमेवेत्यसत्त्वं अतो न स्वप्नदृष्टांतस्यासिद्धत्वं ॥ ८ ॥

कथं वा बाधोपलब्धेरेवमित्याह न स्वत इति उत्तरार्द्धं विभजते तानित्यादिना अपूर्वाणां स्वप्नदृश्यानां स्थानिधर्मत्वेपि किंमा राम०
यातमित्याशंक्याह तस्मादिति स्वप्नदृष्टांतस्य साध्यविकलत्वाभावं निगमयति अतो नेति एवं सा[illegible]पूर्वस्य वा स्वप्न ५
दर्शनस्य स्वप्नद्रष्टृधर्मत्वेन तदविद्याविलसितत्वात् दृष्टांते साध्यसंप्रतिपत्तेः स्वप्नवज्जाग्रद्दृश्यानां मिथ्यात्वं युक्तमित्यर्थः ॥ ८ ॥

दृष्टांतस्य साध्यविकलत्वं शंकित्वा परिहरति अपूर्वमिति यथा स्वर्गं निवसनशीलानामिंद्रादीनां सहस्राक्षत्वादिधर्मस्तथा यदिदमपूर्वं स्वप्नदर्शनमन्यसे तदपि स्थानिनः स्वप्नस्थानवतो द्रष्टुरेव धर्मस्तेन दृष्टत्वात्तस्य मिथ्यात्वसिद्धिरित्यर्थः कथं तेनैव दृष्टत्वं तत्राह तानयमिति यथैवेह व्यवहारभूमौ सुशिक्षितो देशांतरप्राप्तिमार्गस्तेन मार्गेण देशांतरं गत्वा तत्रत्या न्पदार्थान्वीक्षते तथायं स्वप्नद्रष्टा स्वप्नगतान्पदार्थान्यथोक्तप्रकारान्प्रतिपद्यते तस्मात्स्वप्नस्य स्थानिधर्मत्वाद्रज्जुसर्पा

स्वप्नजाग्रद्देहयोः समत्वाज्जाग्रद्देहानामसत्त्वमिति यदुक्तं तदसत् कस्मात् दृष्टांतस्यासिद्धत्वात् कथं न हि जाग्रद्दृष्टा एव वै ते भेदाः स्वप्ने दृश्यन्ते किं तर्हि अपूर्वं स्वप्ने पश्यति चतुर्दंतं गजमारूढमष्टभुजमात्मानं मन्य

अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनां तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः ॥ ८ ॥

ते अन्यदपि एवंप्रकारमपूर्वं पश्यति स्वप्ने तन्नान्येनासता सममिति सदेवेत्यतो दृष्टांतो सिद्धः॥ ८ ॥ ८ ॥

दिवन्मिथ्यात्वमित्यर्थः श्लोकव्याख्यामाशंकामुपन्यस्यति स्वप्नेति समत्वमापेतवत्त्वादिति अनुमानसिद्धस्यार्थस्या नुमानदोषोक्तिमंतरेणासत्त्वमयुक्तमिति पृच्छति कस्मादिति अभिमतं हेतुपदव्याप्तिभंगदोषमाह दृष्टांतस्येति
८ असिद्धत्वं प्रश्नपूर्वकं विशदयति कथमित्यादिना अपूर्वदर्शनमेव विवृणोति॥ चतुर्दंतमिति॥ ८ ॥ ८ ॥

सर्वमिथ्यात्वे प्रमातृप्रमाणादिव्यवहारानुपपत्त्याविरोधमाशंकते उभयोरिति कर्तृकरणकार्यव्यवस्थानुपपत्त्या पि विरोधोऽस्तीत्याह कोवाइति विकल्पे कोनिर्मातेतियावत् श्लोकस्य चोद्यपरत्वं प्रतिजानीते चोदकइति स्वप्नर योजनयाप्रथमार्थापत्तिविरोधं स्फोरयति स्वप्नेति चतुर्थपादमवतार्यार्थापत्त्यन्तरविरोधं स्फुटयति कोवेत्तेषा मिति कर्ता हि पूर्वानुभूतस्मर्तृत्वात् ज्ञातोपलब्धिमीते तेन स्मृत्यनुभवाश्रयाक्षेपेणाकर्त्ताक्षेपो विवक्षितस्त

6

चोदकआह उभयोरिति स्वप्नजाग्रत्स्थानयोर्भेदानांयदि वैतथ्यं क एतानन्तर्बहिश्चेतः कल्पितान् भेदान्

उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि क एतान् बुध्यते भेदान् को वै तेषां विकल्पकः ११ ॥

नकोपीतिक कुपदं?

बुध्यते को वै तेषां विकल्पकः स्मृतिज्ञानयोः क आलंबनमित्यभिप्रायः न चेन्निरात्मवाद इष्टः ११ ११

याचकर्त्रादिव्यवहारानुपपत्तिः सर्वमिथ्यात्वे दुर्वारेत्यर्थः योऽध्यात्मं प्रमाता पश्चाधिदैवं कर्त्तेश्वरस्ताबुभाव पि मिथ्यात्वंगीकारात्प्रमात्रादेरसत्वमित्याशंक्याह नचेदिति यदि प्रमाता कर्त्ता वा नेष्यते तर्हि नैरात्म्यमिष्टमे वापद्यतेन चतदिष्टं शक्यते आत्मनिराकरणस्य दुष्करत्वान्निराकर्त्तुरेवात्मत्वादित्यर्थः ११ ११ ॥ राम०
६

जाग्रद्दृश्यानां मिथ्यात्वं तेषु सदसद्विभागप्रतिभानविरुद्धमित्याशंक्य दृष्टांतेन समाधत्ते स्वप्नवृत्ताविति श्लोकस्य तात्पर्यमा
ह अस्यैवेति स्वप्नदृष्टांतस्य एवं दर्शनत्वप्रयुक्तासाध्यविकलत्वशंकापरिहृत्यैति यावत् स्वप्नस्थाने सर्वस्यास्य मिथ्यात्वा
विशेषेपीत्यर्थः असत्यत्वं परमार्थसद्विलक्षणत्वेन मिथ्यात्वं तत्रापि तर्हि विभागप्रतिभासविरोधात्कुतो मिथ्यात्वमित्या

अपूर्वत्वाशंकां निराकृत्य स्वप्नदृष्टांतस्य पुनः स्वप्नतुल्यतां जाग्रद्दृश्यानां प्रपंचयन्नाह स्वप्नवृत्तावपीति स्वप्नवृ
त्तावपि स्वप्नस्थानेप्यंतश्चेतसा मनोरथसंकल्पितमसत् संकल्पानंतरं स्वप्नसमकालमेवादर्शनात् तत्रैव स्वप्ने

स्वप्नवृत्तावपि त्वंतश्चेतसा कल्पितं त्वसत् बहिश्चेतसा गृहीतं हि सत्सदसतो वैतथ्यं दृष्टं २ जा
ग्रद्वृत्तावप्यंतश्चेतसा कल्पितमसत् बहिश्चेतसा गृहीतं हि सत्सदसतो वैतथ्यं युक्तं १० १० ॥

बहिश्चेतसा गृहीतं च चक्षुरादिद्वारेणोपलक्ष्यं घटादि सदित्येवमसत्यमिति निश्चितेपि सदसद्विभागो दृष्टः उभयो
रप्यंतर्बहिश्चेतःकल्पितयोर्वैतथ्यमेव दृष्टं २ जाग्रदिति सदसतो वैतथ्यं युक्तं अंतर्बहिश्चेतःकल्पितत्वाविशे
षादिति व्याख्यातमन्यत् १०

एवं व्याख्याविशेषादित्याह उभयोरिति २ दार्ष्टांतिकमाह जाग्रदिति युक्तं ॥ व्याख्यातप्रायत्वादित्याह व्याख्यातमिति १
त्वे हेतुमाह अंतरिति श्लोकस्यानामक्षराणां व्याख्यानमनपेक्षितं

परिणामवादं व्यावृत्त्यै विवर्त्तवादं प्रकटयितुं स्वमाययेत्युक्तं तत्र दृष्टान्तमाह रज्ज्वादाविति मायाद्वारेण चिदात्मनो
जगन्निमित्तत्वमुक्तं तस्यैव बुद्धिवृत्तिबिंबितस्य प्रमातृत्वमित्याह स्वयमेवेति नच प्रमातृत्वस्य तात्त्विकत्वं रज्ज्वा
दौ सर्पादिदर्शनवदेवं मिथ्यात्वनिर्द्धारणादित्याह तद्वदिति कर्त्रादिभेदस्य प्रमात्रादिभेदस्य च मिथ्यात्वेनेहना

रज्ज्वादाविव सर्पादीन् स्वयमेव च तानन्बुध्यते भेदांस्तद्वदेवेत्येवं वेदान्तनिश्चयः नान्योऽस्ति
ज्ञानस्मृत्याश्रयः न च निरास्पदे एव ज्ञानस्मृती वैनाशिकानामिवेत्यभिप्रायः १२ ॥ ॥

7

नास्तीत्यादिश्रुतिं प्रमाणयति इत्येवमिति स एवेत्येवकारार्थमाह नान्योऽस्तीति यो जगत्स्रष्टा पश्चात् प्रमाता ततो
ऽन्यो ज्ञानस्य स्मृतेश्चाऽऽश्रयो नास्ति चेतनभेदे मानाभावादनुभवस्मृत्योश्चैकाश्रयत्वस्य प्रसिद्धत्वादित्यर्थः
ज्ञानस्मृत्योराश्रयापेक्षा विषयापेक्षा वा नास्तीत्याशंक्याऽऽ बाधितप्रसिद्धिविरोधान्नैवमित्याह नचेति १२ ॥

कर्तृकार्यादिव्यवस्थानुपपत्तिं परिहरति कल्पयतीति करणांतरं व्यवच्छिनत्ति आत्मनेति कर्मांतरं व्यावर्तयति आत्मानमिति कर्त्रंतरं निवारयति आत्मेति तस्य द्योतकांतरापेक्षां प्रतिक्षिपति देव इति विवर्तवादं द्योतयति स्वमाययेति सर्वस्य मिथ्यात्वेऽपि मायाकल्पितभेदानुरोधेन कर्तृत्वादिव्यवस्था सिध्यतीति भावः प्रमातृप्रमाणादिव्यवहारानुपपत्तिं प्रत्याह स एवेति एकस्मिन्नेवाद्वितीये प्रतीचि वस्तुनि कभेदनिबंधना सर्वा व्यवस्थेत्यत्र प्रमाणमाह

कल्पयतीति स्वयं स्वमायया स्वमात्मानमात्मा देवः आत्मन्येव

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया स एव बुध
नेभेदानिति वेदांतनिश्चयः १२

वक्ष्यमाणं भेदाकारं कल्पयति आरोपितविवक्षयादी॥ ० ॥ ० ॥

इति वेदांतेति यथा घटस्रष्टा कुलालोऽधिष्ठाता मृदोऽन्यो दृष्टो न तथेहान्योऽधिष्ठाताऽस्तीत्याह स्वयमिति यथा तत्र च घटं कुर्वतोऽभ्
न्तरमृदाख्यमुपादानमधिष्ठातुरन्यद्दृष्टं न तथात्रान्यदुपादानमस्तीत्याह स्वमात्मानमिति
भागाभिव्यक्त्याधारो न तथेहाधारोऽन्योऽस्तीत्याह आत्मन्येवेति॥ ०॥

मा॰भा॰टी॰२
८

कल्पितानां कल्पनाकालादन्यस्मिन् काले सत्त्वाभावाज्जाग्रद्भावानां च कल्पनाकालात्कालान्तरेऽपि प्रत्यभिज्ञया सत्त्वावगमात्तु उपपन्नं तेषां मिथ्यात्वमित्याशंक्याह चित्तेति ये कल्पनाकालभाविनो भावा मनस्यन्तर्वर्त्तन्ते ये च प्रत्यभिज्ञायमानत्वेन पूर्वापरकालभाविनो बहिरेव चक्षुरादिद्वारयोग्या दृश्यन्ते ते सर्वे कल्पिताः सन्तो मिथ्यैव भवितुमर्हन्तीति प्रत्यभिज्ञायमानत्वलक्षणो विशेषस्तु नाकल्पितत्वप्रयुक्तः कल्पितेऽपि तद्दर्शनादित्यर्थः श्लोकव्यावर्त्यामाशंकां दर्शयति स्वप्नवदिति यथा स्वप्ने दृश्यमानं सर्वं कल्पितं मिथ्यैवेष्यते तथा जागरितेऽपि दृष्टं सर्वं चित्तस्पन्दितं तेन कल्पितं मि

8

स्वप्नवच्चित्तपरिकल्पितं सर्वमित्येतदाशंक्यते यस्माच्चित्तपरिकल्पितैर्मनोरथादिलक्षणै-
श्चित्तपरिच्छेद्यैर्वैलक्षण्यं बाह्यानामन्योन्यपरिच्छेद्यत्वमिति सा नयुक्ताशंका॥ १४ ॥ १४ ॥

मिथ्यैवेत्येतत्तु नाद्यापि निर्धारितमित्यत्र हेतुमाह यस्मादिति आत्माऽविद्याविवर्त्तेन चित्तेन तावदन्तर्विनिर्मिता मनोरथरूपा मनस्यन्तर्वर्त्तमानाः बहिरज्जुसर्पादयश्च ते चित्तेनैव परिच्छिद्यन्ते ते हि कल्पनाकालमात्रभाविनो न प्रमीयन्ते तैः सह वैलक्षण्यं मनसो बहिर्जाग्रद्दृश्यमानानां भावानामन्योन्यपरिच्छेद्यत्वं कालद्वयावच्छिन्नत्वेन प्रत्यभिज्ञागोचरत्वमिति यस्मादुपलभ्यते तस्मादयुक्तं जागरितस्य स्वप्नवन्मिथ्यात्वमित्यर्थः श्लोकाक्षरैरुत्तरमाह सा नेति॥ १४॥

राम०
८

प्रकृतायांकल्पनायांविवक्षितंक्रममुपन्यस्यति विकरोतीति नियतांश्चेतिचकारादनियतांश्चेतिविवक्षने प्रतिपिपादयिषितंक्रमंप्रति
पत्सर्थंपृच्छति सकल्पयन्निति श्लोकाक्षरयोजनयाबुभुत्सितंक्रमंप्रत्याययति उच्चिन्दृत्यादिना अन्तांश्चेतिशास्त्रीयानितियावत्
चित्तमध्येवासनारूपेणाव्यवस्थितानःनभिव्यक्तनामरूपत्वेनव्यवहाराःयोग्यत्वमाह अव्याकृतानिति कल्पनाकान्चिघुरादीन्
स्थिराणित्यर्थः वहिश्चित्तोवहिर्मुखोवाख्यान्व्यवहारयोग्यान्पदार्थान्कल्पयति अन्तश्चित्तस्तुतेभ्योव्यावृत्तबुद्धिर्मनोरथ

सकल्पयन्केनप्रकारेणकल्पयतीत्युच्यते विकरोतीति विकरोतिनानाकरोतिअपरान्लौकिकान्भावान्पदा
र्थान्शब्दादीनन्तांश्चान्तश्चित्तेवासनारूपेणाव्यवस्थितानःव्याकृतान्नियतांश्चपृथिव्यादीनःनियतांश्चकल्पनाका

विकरोत्यपरान्भावानन्तश्चित्तेव्यवस्थितान् नियतांश्चबहिश्चित्तएवंकल्पयतेप्रभुः १२

लान्वहिश्चित्तःसन्नन्तश्चान्तश्चित्तोमनोरथादिलक्षणानित्येवंकल्पयतिप्रभुरीश्वरआत्मेत्यर्थः॥ १३ ॥

दिलक्षणानात्मन्यवस्थितान्भावान्अव्यवहारयोग्यान्कल्पयित्वापुनर्वहिर्व्यवहारयोग्यतायैकल्पयतीत्यर्थः ए
तदुक्तंभवतियथालोकेकुलालोनाततनुवायोवाघटंपटंवाकार्यंचिकीर्षुरादौव्यवहारायोग्यांव्यक्तिंबुद्ध्यावविभा
व्यपश्चात्तामेववहिर्नामरूपाभ्यांसंपादयतितथैवायमादिकर्त्तापिमायालक्षणोस्वचित्तेनामरूपाभ्यामव्यक्तरूपेणा
स्थितान्स्वष्टव्यपदार्थान्प्रथमंसिसृक्षिताकारेणान्तर्विभाव्यपश्चाद्बहिःसर्वप्रतिपत्साधारणरूपेणसंपादयतीति

यावतांकालेनायंघटोऽर्थक्रियांनिर्वर्तयितुंशक्नोतितावताकालेनावछिन्नःसन्नेषतिष्ठतीतिउदाहरणांतरमाह तावानिति
परोस्ततयावस्थितोयावताकालेनावछिन्नःस्वकार्यंनिर्वर्त्यनिर्हरणोत्येतावताकालेनावछिन्नःसन्तिष्ठतीत्यपरमुदाहरण
माह एतावानिति उक्तेनन्यायेनपरेणापरेणचकालेनपरिछेद्यत्वंजाग्रद्दृश्यानांभावानामुपलभ्यतेकालद्वयस्यच
परिछेदकत्वंतथाचतेसर्वेभावाबहिर्दृश्यमानाःद्वयकालेनकालद्वयेनपरिछेद्याभवंतीत्यर्थः तृतीयपादंव्याचष्टे

तावानयं एतावान्सइतिपरस्परपरिछेदकत्वंबाह्यानांभेदानांतेद्वयकालाः अंत
श्चित्तकालाबाह्याश्चद्वयकालाः कल्पिताएवतेसर्वेनबाह्योद्वयकालत्वविशेषः क
ल्पितत्वव्यतिरेकेणान्यहेतुकः अत्रापिहिस्वप्नदृष्टांतोभवत्येव १४ ॥ १४

अंतरिति चतुर्थपादार्थमाह नेत्यादिना बाह्योजाग्रद्दृश्येषुबाह्यपदार्थेष्ववस्थितोद्वयकालत्वेनकालद्वयावछेदेन
कृतःप्रत्यभिज्ञायमानत्वरूपोविशेषोऽन्यहेतुकोनभवतिकल्पितेपितथाविधविशेषसंभवादित्यत्रदृष्टांतमाह अत्रा
पिहीति यद्यपिसर्वंजाग्रद्भेदजातंकल्पितंतथापितत्रयथोक्तोविशेषःस्फुटःसिध्यतिस्वप्नेसर्वस्यभेदजातस्यकल्पि
तत्वेपिप्रत्यभिज्ञायमानत्वाज्जागरितेपितदुपपत्तेरित्यर्थः १४

येमनस्यंतर्मनोरथरूपांभावास्ते चित्तकालांभवंतीत्यत्रं चित्तकालत्वं विशदयति चित्तेत्यादिना वाच्यार्थमुक्त्वा विवक्षितार्थमा
ह कल्पनेति द्वितीयपादमवतार्य व्याकरोति द्वयेति येमनसो बहिरुपलभ्यंते ते भेदकालाः कालस्य भेदो भेदकालः स ये
षां ते तथेति अत्यंतं स्वलक्षणान्येन एवं रूपाण्येन चापरेणापरिच्छेद्या भिन्नकालावच्छिन्नत्वेन प्रत्यभिज्ञापमानाइत्यर्थः प्रत्य

चित्तकाला इति चित्तकाला हि ये ऽन्तस्तु चित्तपरिच्छेद्या नान्यश्चित्तकालं व्यतिरेकेणापरिच्छेदकः कालो येषां ते चित्तका

चित्तकाला हि ये ऽन्तस्तु द्वयकालाश्च ये बहिः कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः १७

लाः कल्पनाकाल एवोपलभ्यंत इत्यर्थः द्वयकालाश्च भेदकालाश्च भेदकालाश्चान्योन्यपरिच्छेद्याः यथाः गोदोह
नमास्ते यावदास्ते तावद्गां दोग्धि यावद्गां दोग्धि तावदास्ते॥

भिज्ञायमानत्वमुदाहरणं निष्टतया स्फुरयति यथेति आगोदोहनं गोदोहनपर्यंतमास्ते देवदत्तस्तिष्ठतीति प्रत्यभिज्ञा
देयत्वेनाभिज्ञो दाहरणीया यावता कालेनावच्छिन्नो वर्तते तावता कालेनावच्छिन्नो गोदोहनं निर्वर्तयतीत्यनेककाला
वस्थापित्वेन प्रत्यभिज्ञाविषयत्वं तत्संदर्शयति यावदिति॥

भवतु सर्वस्य कल्पितत्वं सा पुनः सर्वकल्पना केन द्वारेणेत्याशंक्याह जीवमिति आत्मा हि स्वेन स्वमायावशेन कल्पयन्नादौ वि
शिष्टरूपेण जीवं कल्पयते तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः स्वयमेव जीवभावमापद्यते तद्द्वारेण पुनर्नानाविधान्भावा
न्निर्मिमीते ज्ञानस्मृतिवैषम्यात्तत्कल्पितेषु भावेषु वैषम्योपपत्तिरित्यर्थः श्लोकमावर्त्य प्रश्नमुत्थापयति बाह्यानामिति प
दार्थाः साध्यसाधनत्वेनावस्थिताः बाह्याः सुखदुःखज्ञानरागद्वेषादयस्त्वाध्यात्मिकास्तेषां परस्परं निमित्तनैमित्तिक

बाह्यानामाध्यात्मिकानां भावानामितरेतरनिमित्तनैमित्तिकतया कल्पनायां किं मूलमित्युच्यते जीवमिति जीवं हे

जीवं कल्पयते पूर्वं ततो भावान् पृथग्विधान् बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथास्मृतिः १६ ॥

तुफलात्मकं अहं करोमि मम सुखं दुःखमित्येवंलक्षणं अनेवंलक्षण एव शुद्धे आत्मनि रज्ज्वामिव सर्पं कल्पयते पूर्वं।

ताऽस्ति बाह्यान्निमित्तीकृत्याध्यात्मिका भवंति तानपि निमित्तीकृत्येतरे जायंते तदेवमितरेतरनिमित्तनैमित्तिकतया
च कल्पनायां मूलं च वक्तव्यं निर्मूलकल्पनायामतिप्रसंगादित्यर्थः श्लोकाक्षरयोजनया परिहरति उच्यत इति हे
तुफलात्मकमित्युक्तमेव व्यनक्ति अहमिति हेतुफलभावविकलं परिशुद्धमात्मरूपं जीवकल्पनाधिष्ठानं दर्शयति
अनेवमिति आरोपस्याधिष्ठानापेक्षत्वात्तत्र दृष्टान्तमाह रज्ज्वामिवेति॥ ० ॥ ० ॥ ० ॥

स्वप्नजागरितयोरुभयोरपि मिथ्यात्वे स्फुटास्फुटावभासविभागानुपपत्तेर्न विशेषेणामिथ्यात्वमित्याशंक्याह अव्यक्ता इति ये
मनस्यंतर्भावनारूपत्वादस्फुटा ये च मनसो बहिरुपलभ्यमानाः स्फुटा भवंति ते सर्वे मनःस्पंदनमात्रत्वेन कल्पिता मिथ्यैवांतर्ब
हिरिंद्रियभेदनिमित्तः स्फुटत्वास्फुटत्वविशेषः न मिथ्यात्वममिथ्यात्वं वा तत्रोपयुज्यते मिथ्याभूतेष्वपि तद्दर्शनादित्यर्थः श्लो
कार्थं व्याकरोति यद्यपीत्यादिना मनःस्पंदनमनोरथरूपाणां भावानामव्यक्तत्वमस्फुटत्वं तत्र हेतुमाह मन इति चक्षु
रादिग्राह्यत्वेन मनसो बहिर्भावानां स्फुटत्वं दृष्टं तदेवामिथ्यात्वकृतमिति शंकां वारयति नासाविति सर्वसंप्रतिपन्नमि

अव्यक्ता इति पद्यंतरव्यक्तत्वं भावानां मनोवासनामात्रायोभिव्यक्तानां स्फुटत्वं वा बहिश्चक्षुरादींद्रियांतरे विशेषो

अव्यक्ता एव येंतस्तु स्फुटाश्च च ये बहिः कल्पिता एव ते सर्वे विशेषस्त्विंद्रियांतरे॥ १५ ॥

नासौ भेदानामस्तित्वकृतः स्वप्नेपि तथादर्शनात् किंतर्हींद्रियांतरकृत एव अतः कल्पिता एव जाग्रद्भावा अपि स्वप्नभाववदिति सिद्धं १५
थ्यात्वेपि स्वप्ने स्फुटत्वास्फुटत्वविशेषप्रतिभानान्नासौ विशेषो मिथ्यात्वं वा प्रयोजयितुं प्रभवतीत्या
ह स्वप्नेपीति अयं विशेषस्तर्हि केन सिध्यतीत्याशंक्य चतुर्थपादार्थमाह किंतर्हीति मनोमात्रसंबंधादंतर्भावानां वासना
मात्ररूपाणामस्फुटत्वं बहिर्भावानां तु चक्षुरादिबहिरिंद्रियसंबंधात्पुष्टं स्फुटत्वं तदेव विशेषो मिथ्यात्वाविशेषेपि सिध्यती
त्यर्थः स्फुटत्वास्फुटत्वप्रतिभासभेदस्यामिथ्यात्वेपि संभवात्प्रागुक्तमनुमानमविरुद्धमित्युपसंहरति अत इति १५ ॥

मित्र



प्रकृतकल्पनामेव प्रपंचयति अतइत्यादिना सत्यन्नपानाद्युपयोगतइत्यादि भवति असतिनभवतीत्यन्वयव्यतिरेकरूपाभ्यामानद्वेजनादिकं हेतुरिति कल्पनाविज्ञानमुत्पद्यतेततइत्यादिकंफलमितिकल्पनाविज्ञानंजायतेततोपरेद्युरुभयोरपिहेतुफलयोः स्मृतिरुद्भवति ततश्चफलसाधनसमानंजोद्येकर्त्तव्यताविज्ञानंततश्चाभिलषितततइत्यादिफलार्थत्वेती।

अतोहेतुकल्पनाविज्ञानात्फलविज्ञानंततोहेतुफलस्मृतिः ततस्तद्विज्ञानंतदर्थक्रियाकारकतत्फलभेदविज्ञानानितेभ्यस्तत्स्मृतिस्ततस्मृतेश्चपुनस्तद्विज्ञानमित्येवंबाह्यानाध्यात्मिकांश्चेतरेतरनिमित्तनैमित्तिकभावेनानेकधाकल्पयते १६ ॥

नपाकादिक्रियातत्कारकंतंडुलादितत्फलान्ननिष्पत्त्यादीनिविशेषविज्ञानानिभवंति ततोहेत्वादिस्मृतिःततस्तदनुष्ठानंततश्चफलमित्यनेनक्रमेणमिथोहेतुमत्तयाकल्पनाभवतीत्यर्थः प्रकृतांनांकल्पनामुपसंहरति एवमिति १६ 

द्वितीयतृतीयपादौ विभजते ततइति तादर्थ्येन प्रथमं कल्पितस्य भोक्तृजीवस्य शेषत्वेनेत्यर्थः यद्यपि जीवः सर्वकल्पनायां मूलभूतो हेतुस्तथापि तस्य तत्र कल्पनाविशेषो विशेषहेतुर्व्यतिरेकेण न संभवतीति शंकते तत्रेति चतुर्थपा-

ततस्तादर्थ्येन क्रियाकारकफलभेदेन प्राणादीन्नानाविधान्भावान्बाह्यानाध्यात्मिकांश्चैव कल्पयते तत्र कल्पनायां को हेतुरित्युच्यते योऽसौ स्वयं कल्पितो। जीवः सर्वकल्पनायामधिकृतः स यथाविद्यो यादृशी विद्या विज्ञानमस्येति यथाविद्यस्तथाविधैवं स्मृतिस्तस्येति तथास्मृतिर्भवति स इति॥ १६ ॥ १६ ॥

देनोत्तरमाह उच्यतइति कल्पितो विशिष्टरूपेणेति शेषः अधिकृतः स्वामित्वेन संबद्ध इत्यर्थः इति शब्दः श्लोकाक्षरयोजनासमाप्तिद्योतनार्थः॥

एतदेव व्यतिरेकद्वारा विवृणोति यदिहीति देवदत्तस्य हस्ताद्यवयवेषु तद्रूपेणैव निश्चितेषु सर्पादिविकल्पो यथा नोपलभ्यते तथा पुरोवर्तिन्यपि रज्जुरूपेण निश्चिते नासौ युक्तस्तथा च रज्ज्वज्ञानादेव स भवतीत्यर्थः उपपादितं दृष्टान्तमनूद्य दार्ष्टान्तिकमभिदधानश्चतुर्थपादार्थमाह एवमिति हेतुफलादीत्यादिशब्देन कर्तृत्वभोक्तृत्वरागद्वेषादि गृह्यते विलक्षणत्वमेव स्फुटयति स्वेनेति अनारोपेणेति यावत् विज्ञप्तिर्विशुद्धत्वं जन्मादिराहित्यं आरोपितरूपशून्यत्वं तन्मात्रत्वं चेत्यर्थः तन्मात्रत्व

12

यदि हि पूर्वमेव रज्जुः स्वरूपेण निश्चिता स्यात् न सर्पादिविकल्पोऽभविष्यत् यथा स्वहस्ताङ्गुलादिषु एवं दृष्टान्तः तद्वद्धेतुफलादिसंसारधर्मानर्थविलक्षणतया स्वेन विशुद्धविज्ञप्तिमात्रसत्ताद्वयस्वरूपेणाऽनिश्चितत्वाज्जीवप्राणाद्यनन्तभावभेदैरात्मा विकल्पित इत्येष सर्वोपनिषदां सिद्धान्तः ॥ १७ मय्येवेदं कल्पितं॥

मयुक्तं सामान्यविशेषभावादित्याशंक्याह सत्त्वेति नच तत्रान्यदस्ति सत्त्वमिति मत्वा विशिनष्टि अद्वयेति सच्चिदानंदाद्वयात्मा अविद्याविलसितं द्वैतमित्यत्र प्रमाणं सूचयति एवं इति अद्वैतश्रुतयस्तावत्त्रतत्रोपलभ्यंते यत्र हि द्वैतमिव भवतीत्याद्याश्च द्वैतप्रतिभासयोर्मृषात्वमावेदयन्त्यः श्रुतयः श्रूयन्ते ते नाद्वैतं तत्त्वं द्वैतमविद्याविजृम्भितमिति प्रमाणसिद्धमित्यर्थः १७ ॥

इदानीं जीवकल्पनानिमित्तं निरूपयति अनिश्चितेति श्लोकस्य तात्पर्यं दर्शयितुं वृत्तं कीर्त्तयति तत्रेति पूर्वश्लोकः सम्प्रत्यर्थः जीवकल्पनायाः निरस्तत्वायोगात्तन्निमित्तत्वस्य वक्तव्यत्वात्तस्य च वस्तुत्वे निष्ठत्वानुपपत्तेरवस्तुत्वे च निमित्तत्वासिद्धेर्जीवकल्पनाया दुर्घटत्वात्तत्कार्यभूतापि कल्पना नावकल्पत इत्याशङ्कते सैवेति उत्तरत्वेन श्लोकावतारः

तत्र जीवकल्पना सर्वकल्पनामूलमित्युक्तं सैव जीवकल्पना किंनिमित्तेति दृष्टान्तेन प्रतिपादयति अनिश्चितेति य

अनिश्चिता यथा रज्जुरंधकारे विकल्पिता सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः १७ ॥

था लोके स्वेन रूपेणानिश्चिता अनवधारिता एवमेवेति रज्जुर्मंदांधकारे किं सर्प उदकं दंड इति वा अनेकधा विकल्पिता भवति सर्वं स्वरूपानिश्चयनिमित्तं ॥

गपवृत्तार्थमाचष्टे दृष्टान्तेनेति स्वमसाधारणरूपं रज्जुत्वं तेनेति यावत् अनवधारितत्वमेव स्फोरयति एवमेवेति रज्जुरेवेयमित्यनेन प्रकारेणेत्यर्थः उक्तावधारणराहित्ये कारणं सूचयति मंदेति एवं रज्जुस्वरूपनिश्चयात्प्रागस्या या इत्यर्थः सर्पादिकल्पना या मन्वयव्यतिरेकसिद्धमुपादानमुपन्यस्यति स्वरूपेति॥ ॥

आत्मविनिश्चयमेव विशिनष्टि आत्मैवेति सर्वमिदमात्मैवेत्युक्ते पूर्णत्वं तस्योक्तं तेन पूर्वभाविना कारणेन संस्पर्शशून्योऽपूर्वः प
श्चाद्भाविना कार्येण संबंधविधुरोऽनपरः अंतरं छिद्रं तच्छून्योऽनंतरः छिद्रैकरसत्वस्यैव प्रत्यक्षमबाह्यत्वं कार्यकारणाख्य
दृश्यकल्पनाधिष्ठानत्वेन ततोऽर्थांतरत्वादित्याह सबाह्येति विशेषणत्रयं कौटस्थ्यव्यवस्थापनार्थं जन्मादिसंबंधा



आत्मैवेदं सर्वं अपूर्वोऽनपरोऽनंतरोऽबाह्यः सबाह्याभ्यंतरो ह्य
जः अजरोऽमरोऽमृतोऽभयः एक एवाद्वय इति १९ ॥ ॥

वं
भावे कारणमविद्यासंबंधराहित्यं दर्शयति अभय इति न खल्वविद्या तत्र कारणत्वेन संबंधमनुभवति तस्य पूर्णत्वेन
कारणानपेक्षत्वादित्याह एक इति द्वैताद्द्वैतव्यावृत्त्यर्थमवधारणं नन्वविद्याया निराश्रयत्वानुपपत्तेराश्र राम॰
यांतरस्य चासत्वात्तत्रैव साऽवतिष्ठतीति चेत् सत्यमविद्या दृष्ट्या तस्मात्तत्र प्रवेशोऽपि वस्तुदृष्ट्या नासौ तस्मिन्नविद्यैवेत्युं प्रभवती १३
त्यभिप्रेत्याह अद्वय इति १९

अविद्याकृता जीवकल्पनेत्यन्वयमुखेनोक्तं तदेवेदानीं व्यतिरेकमुखेन दर्शयति निश्चितायामिति रज्जुरेवेति रज्ज्वां निश्चितायां तदज्ञाननिवृत्तेस्तदुत्थसर्पादिविकल्पः सर्वथा निवर्तते रज्जुमात्रं चावशिष्यते तद्वदात्मनिश्चितो निश्चयो यदा संपद्यते तदा सर्वस्यात्माऽविद्याकल्पितस्य जीवादिविकल्पस्य व्यावृत्तेरद्वैतमेव आत्मतत्त्वं परिशिष्यते तस्मादात्माविद्याविजृम्भि

निश्चितायामिति रज्जुरेवेति निश्चये सर्वविकल्पनिवृत्तौ रज्जुरेवेति चाद्वैतं यथा तथा नेति नेतीति सर्वसंसार

निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः १८ ॥

धर्मशून्यप्रतिपादकशास्त्रजनितं विज्ञानं सूर्यालोककृतात्मविनिश्चयः १८ ॥श्रीकृष्णाय नमः॥ ॥

ता जीवकल्पनेत्यर्थः दृष्टान्तभागं व्याचष्टे रज्जुरिति तद्वदित्यादि व्याकरोति तथेति सर्वस्यापि संसारात्मनो धर्मस्यात्मन्यारोपितस्यासत्तावेदकं च निषेधशास्त्रं तेन जनितं विज्ञानमेव सूर्यालोकस्तत्कृतो यो यमात्मविनिश्चयः स एवाद्वितीयः शिष्यते द्वैतं पुनः सर्वमेव व्यावृत्तं भवतीत्यर्थः ॥

केते प्राणादयो येनतामाधार्येणात्मा विकल्प्यते माययेत्यपेक्षायां प्राणादिविकल्पनामुदाहरति प्राणाइतीति प्राणो हिरण्य
गर्भस्तदस्यैश्वर्यो वा समजगतो हेतुरिति प्राणविदो हैरण्यगर्भा वा वैशेषिकादय स्तत्कल्पयंतितदिदं कल्पनामात्रं स्वतंत्रस्य हि
रण्यगर्भस्य सर्वजगद्धेतुत्वे मानाभावात्पौरुषेयागमस्यापौरुषेयश्रुतिविरोधेऽप्रामाण्यात्वायोगात्तदस्यैश्वर्यवादस्य च
प्रमाणयुक्तिविहीनस्य प्रतिपत्तुमशक्यत्वादित्यर्थः कल्पनांतरं दर्शयति भूतानीतिचेति पृथिव्यप्तेजोवायवस्तत्वा
नि तानि चत्वारि भूतानि जगत्कारणानीति लोकायतिकाः तदपि कल्पनामात्रं नहि भूतानि स्वतः सिद्धानि जडत्वविरो
धात् नापि परतः सिद्धानि स्वगुणस्य चैतन्यस्य स्वग्राहकत्वायोगात् वह्निगतोष्णस्य वह्निविषयत्वादर्शनाद्भूतानि

प्राणाइतिप्राणविदोभूतानीतिचतद्विदः गुणाइतिगुणविदस्तत्वानीतिचतद्विदः २०

14 जगत्कारणानीति कल्पनैवेत्यर्थः सत्वरजस्तमांसि त्रयो गुणाः साम्येनावस्थिता जगतो महदादिलक्षणस्य कारण
मिति सांख्यास्तदपि कल्पनामात्रं साम्येन स्थितानां कारणत्वे प्रलयाभावप्रसंगात् वैषम्यभजनस्य च निर्हेतुकत्वे
सदा यातास्सहेतुकत्वे हेतोर्नित्यत्वे प्राचीनदोषानुषंगात् अनित्यत्वे हेत्वंतरापेक्षायामनवस्थानादित्याह गु
णा इतीति कल्पनांतरमाह तत्वानि चेति आत्माविद्याशिवा इति संक्षेपतस्त्रीणि तत्वानि सर्वजगत्प्रवर्त्तकानीति राम॰
शैवा मन्यंते तदपि कल्पनामात्रं आत्मनो भिन्नत्वे शिवस्य घटादितुल्यत्वप्रसंगादभिन्नत्वे तत्वानां त्रित्वव्याघातादित्य १४

पं: २०

आत्मनोऽद्वितीयत्वेकथमनेकैर्भावैस्तस्य विकल्पितत्वमित्यभिप्रायः प्रतिपत्साध्यत्ववतिष्ठते प्राणादिभिरि सिद्धांती
स्वाभिसंधिमुद्घाटयन्नुत्तरमाह मायेति चोद्यभागं विभजते यदीति उत्तरार्द्धमुत्तरत्वेन व्याकरोति उच्यत इति मायामे

यद्यात्मैक एवेति निश्चयः कथं प्राणादिभिरनंतैर्भावैरेतैः संसारलक्षणैर्विकल्पित इति उच्यते शृणु प्राणादि
भिरिति मायैषा तस्यात्मनो देवस्य यथा मायाविना विहिता माया गगनमतिविमलं कुसुमितैः सपलाशैस्तरुभिराकी

प्राणादिभिरनंतैस्तु भावैरेतैर्विकल्पितः मायैषा तस्य देवस्य यया संमोहितः स्वयं १९

र्णमिव करोति तथेयमपि देवस्य माया यया स्वयमपि मोहित इव मोहितो भवति मम माया दुरत्येत्युक्तं १९

वद्दृष्टांतेन स्पष्टयति यथेति तामेव मायां कार्यद्वारा स्फोरयति तथेति यथा लौकिको मोहितो मोहपरवशो दृश्य
ते तथाऽयमात्मा स्वयमेव मायासंबंधान्मोहितो भवत्येतो मोहद्वाराऽऽत्मन्येव मायाधिगतिरित्यर्थः मायामोहहे
तुत्वं भगवतापि सूचितमित्याह ममेति १९

मा·भा·टी·२ ऋग्वेदादयो वेदाश्चत्वारस्तत्त्वानीति पाठकाः वदंति तदपि कल्पनामात्रं नहि वेदा लौकिकवर्णव्यतिरिक्ता दृश्यंते क्र
१५ मवतामेव वर्णानां वेदशब्दवाच्यत्वांगीकारात् क्रमश्चोच्चारणोपलक्ष्यो रन्यतरगतो वर्णेष्वारोप्यते तथा च तथाविध
क्रमवतां वर्णानामारोपितरूपेण वेदशब्दवाच्यत्वात्कुतो वेदानां परमार्थतेत्याह वेदा इति ज्योतिष्टोमादयो यज्ञाव
स्तुभूतां भवंतीति बौधायनप्रभृतयो याज्ञिका मन्यंते तदपि भ्रांतिमात्रं यज्ञस्यारंभासमाप्तौ द्रव्यदेवतात्यागद्वयस्त्रै

वेदा इति वेदविदो यज्ञा इति च तद्विदः भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः २२

25

कैकस्मिन्यज्ञविज्ञानाभावात् समुदायस्यावस्तुत्वादित्याह यज्ञा इति चेति भोक्तैवात्मा न कर्त्तेति सांख्यास्तत्र
भोगो यदि विक्रियास्वीक्रियते तर्हि कर्तृता नित्यत्वादिप्रसंगः स्वभावत्वे सदास्यादिति विषयसन्निधौ भोक्तृ
त्वं भ्रांतिरेवेत्याह भोक्तेति चेति सूपकारास्तु भोज्यं वस्त्विति प्रतिजानते तदपि न मधुरादिरसव्यंजकव्यंज राम०
नादेस्तैरेवासम्यक्त्वदर्शनादैकरूप्यासंभवादित्याह भोज्यमिति चेति २२ २२ २२ १५

एकस्यात्मनो विश्वादयः पादाः सर्वव्यवहारहेतवो भवंतीत्यपि कल्पनामात्रं निरंशस्यात्मनोंऽशभेदानुपपत्तेरित्याह पाद
इतीति वात्स्यायनप्रभृतीनां कल्पनां कथयति विषया इतीति शब्दादयो विषया भूयो भूयो भुज्यमानास्तत्त्वमिति विभ्रमा
त्रं विषयस्य विषयाणां च हूरमत्यंतमंतरं उपभुक्तं विषं हंति विषयाः स्मरणादपीति विषयाऽनुसंधानस्य निंदितत्वात्तेषां
पारमार्थिकतत्त्वभावानुपपत्तेरित्यर्थः भूर्भुवः स्वरिति त्रयो लोकास्तु भक्ताः संतीति पौराणिकास्तदपि कल्पनामा
व

पादा इति पादविदो विषया इति तद्विदः लोका इति लोकविदो देवा इति च तद्विदः २१

त्रं स्थानभेदेन त्रित्वे तदानंत्यस्य दुरुत्तरत्वात्तत्तातंत्र्यस्य चासिद्धत्वादित्याह लोका इतीति अग्नींद्रादयो देवास्त
त्फलदातृत्वे तेषां भक्त्यभ्योऽविवेक्याभावप्रसंगात्स्वातंत्र्येणोपकारकत्वेन तदाराधनवैयर्थ्याच्च तद्भक्तानामपि
विप्रतिपत्तिदर्शनात् तत्प्रसादस्याकिंचित्करत्वादित्याह देवा इति चेति २१ ॥ ॥ ॥

भा॰भा॰टी॰ कालः परमार्थ इति ज्योतिर्विदस्तत्र च न कालैक्ये मुहूर्त्तादिव्यवहारायोगात्तन्नानात्वेऽपि न स्यात्तत्र अनन्यविषयत्वेन प्रतीतेः
१६ उदयकाल इत्यादिना क्रियाधर्मत्वेन प्रतीतेः स्फुटत्वान्न च क्रियाधर्मत्वं कालेऽपि तदुत्पत्तिदर्शनात् अन्यथा काला
नवच्छिन्नत्वेन क्रियानित्यत्वापातादित्याह कालइतीति स्वरोदयविदस्तु दिशः परमार्थ इत्याहुस्तदपि भ्रान्तिमा
त्रं तद्धि दामपि पराजयदर्शनादित्याह दिश इति चेति धातुवादी मन्त्रवादश्च स्यादयो वादा वस्तुभूता भवंतीति केचित्त
दपि कल्पनामात्रं तान्यादि स्वभावे स्थिते नष्टे च कनकादि स्वभावासंभवात् मंत्रवादेऽपि कालदष्टो न जीवति अका

26 कालाइति कालविदो दिश इति च तद्विदः वादा इति वादविदो भुवना
नीति तद्विदः २४ मन इति मनोविदो बुद्धिरिति च तद्विदः ॥ ॥

लदष्टः स्वयमेवोत्थास्यतीत्यभ्युपगमाद्व्यामोहमात्रमित्याह वादाइतीति भुवनानि चतुर्दश वस्तूनीति भुवनकोश
विदस्तदपि कल्पनामात्रं तेषामदृष्टत्वान्न च वचनेभ्यस्तद्दर्शनं तेषां मिथो विप्रतिपत्तिदर्शनादित्याह भुवनानीति
२५ मन एवात्मेति लोकायतभेदस्तदपि भ्रान्तिमात्रं तस्य स्यात्तत्र अकुशलानामनुपपत्तेरस्यात्तत्र घटवदनात्मत्वा राम॰
त्करणत्वाच्च दीपवदात्मत्वायोगादित्याह मनइति बुद्धिरेवात्मेति बौद्धास्तेषामपि भ्रान्तिमात्रमेव तत्त्सुष्टुमे भिचारा व १६
द्धेघस्य च घटवदतिरिक्तत्वे घत्वादित्याह बुद्धिरिति चेति॥

आत्मास्वस्थोऽणुपरिमाणः स्यादिति केचित्तन्न युगपद्देहे शरीरव्यापिवेदनाऽनुसंधानासिद्धेरित्याह स्वस्मर
तीति स्थूलो देहोऽहं प्रत्ययादात्मेति लोकायतभेदस्तच्च न मतस्थुमयोरपि संघाताविशेषाच्चैतन्यप्रसंगादेकैकस्य
चभूतस्य चैतन्यादर्शनान्न संततस्य चावस्तुत्वादित्याह स्थूल इति चेति मूर्ति स्निग्धत्वादिधारी महेश्वरस्य क्रीडादिधा
धा

स्वस्थ इति स्वस्थविदः स्थूल इति च तद्विदः मूर्त इति मूर्तविदोऽमूर्त इति च तद्विदः २२

शरीवा परमार्थो भवतीत्यागमिकास्तदपि ग्रहकल्पनं च विग्रहाभावे लीलायोगादयुक्तमित्याह मूर्त इति अमूर्तः स
र्वाकारशून्यो निःस्वभावः परमार्थ इति शून्यवादिनस्तदपि कल्पनामात्रं परमार्थतो निःस्वभावश्चेति व्याघाता
दित्याह अमूर्त इति चेति २३ ॥

* भ्रांतिमात्रमखलदृ शरीरवत्तस्यापि पांचभौतिकत्वा लीलावि २ *
शरीरस्य

मा०भा०टी० लोकानुरंजनमेव तत्त्वमिति च लौकिकास्तदपि विभ्रममात्रं लोकस्य भिन्नरुचित्वात् तदनुरंजनस्येश्वरेणापि कर्तुमशक्यत्वादित्या
१७ ह लोकानिति इक्ष्वाकुभक्तस्त्वाश्रमाः परमार्थाइति समर्थयंते तदसत् वेदस्याश्रमशब्दार्थत्वे शूद्रादेरपि प्रसंगाज्ज्ञातेश्चदुर्वि
वेचनत्वात् तन्माल स्याश्रमस्य दर्शयितुमशक्यत्वात्संस्कारस्य च देहसमवायित्वे पारलौकिकत्वायोगाद् संगे चात्मनि तद

लोकान् लोकविदः प्राहुराश्रमाइति तद्विदः स्त्रीपुंनपुंसकं लैंगाः परापरमथापरे २७

17

समवायादित्याह आश्रमाइतीति वैय्याकरणास्तु स्त्रीपुंनपुंसकं शब्दजातं तत्त्वमिति वर्णयंति तदप्ययुक्तं स्यादेः शब्दस्वभा
गा वत्वे सर्वादीनां स्त्रीलिंगत्वायोगादेकस्यानेकस्वभावत्वासंभवादौपाधिकधर्मत्वे च तस्यावस्तुत्वप्रसंगादित्याह स्त्रीपुंनपुंन राम०
सकमिति हे ब्रह्मणी वेदितव्ये परं चापरं चेति केचित्तन्न परिच्छेदे क्वचिदपि ब्रह्मत्वायोगाद्वस्तुनोः परिच्छिन्नस्य तद्भावादि १७
त्याह परापरमिति २७

चित्तमेवं बाह्याकारभूत्यं विज्ञानं तदेवात्मेत्यपरे तन्नापि शुक्लत्याया विशेषानुत्पत्तेरांतित्वमित्याह चित्तमिति धर्माधर्मौ वि
धिनिषेधचोदनागम्यौ परमार्थाविति मीमांसकास्तद्रूपिकल्पनामात्रं देशकालादिषु धर्माधर्मयोर्विप्रतिपत्तिदर्शनादित्या
ह धर्मेति २५ प्रधानं मूलप्रकृतिर्महदहंकारतन्मात्राणि सप्त प्रकृतिविकृतयः पंचज्ञानेंद्रियाणि पंचकर्मेंद्रिया
णि पंचविषयाः मनश्चैकमिति षोडश विकाराः पुरुषस्तु द्रष्टृस्वभाव इति पंचविंशतिसंख्याः सत्त्वकल्पनामात्रं पं कः अपंचो
चविंशतिविदो ये सांख्यास्तेषां वर्तकत्वे वैषम्यमौदासीन्यवर्तकत्वे च यावत्प्रमित्यप्रमित्योरनुपपत्तेरित्याह पंचविंशक इति वस्थिति सं
पातंजलाः पुनरीश्वरमधिकं पठंतः षड्विंशतिपदार्था इति कल्पयंति तदयुक्तमीश्वरस्य पुरुषांतर्भावादधिकत्वा ख्या ३+

चित्तमिति चित्तविदो धर्माधर्मौ च तद्विदः २५ पंचविंशक इत्येके ष
ड्विंश इति चापरे एकत्रिंशक इत्याहुरनंत इति चापरे २६ ॥

नुपपत्तेरनंतरभावे चेद्घटवदनीश्वरत्वप्रसंगादित्याह षड्विंश इति चेति पाशुपतास्तु रागाविद्यानियतिकाल
कलामायाधिकास्त एवैकत्रिंशत्पदार्था इति ब्रुवते तन्न कुतस्त्वपि रागाविद्ययोरवांतरभेदवदस्मितादेरपि तद्भि पंचक्लेश =
न्नत्वेन संख्यातिरेकात्तस्य रागोपलक्षितत्वे तस्याप्यविद्योपलक्षितत्वेनान्यतापातादविद्यामाययोश्चैकत्वाद
वांतरभेदे चानियतावधित्वप्रसक्तेः संख्यानिरेकं तादवस्थ्यं कालकलास्त्वचेतनत्वप्रसिद्धेरित्याह एकत्रिंशक इति अ
नंतः पदार्थभेदो न नियतोऽस्तीति केचित्तद्रूपिणे वादिनां विवादमनादृत्य वादस्य चाज्ञानमूलत्वाद्दिसामानंत इतीति २६

लौकिकानांपरीक्षकाणांचकतिपयकस्यचिन्नामभेदानुदाहृत्यानेनतत्तेषामुदाहर्तुमशक्यत्वंदृष्ट्वासंक्षेपमात्रेणाचष्टे यंभावमिति
पादत्रयंविभजते किंबहुनेत्यादि तमेवभावंविशिनष्टि योदर्शितइति सकलंद्रष्टारंरक्षतीत्यपेक्षायामाह असाविति सा

किंबहुनाज्ञानादीनामन्यतमंमुक्तमनुक्तंवाऽन्यंयंभावंपदार्थंदर्शयेद्यस्याचार्योऽन्योवेत्ययंइदमेवंतत्त्वमितिसतंभावमा
त्मभूतंपश्यत्ययमहमितिवाममेतिवातेचद्रष्टारंसभावश्चवतियोदर्शितोभावोऽसौभूत्वारक्षतिस्वेनात्मनासर्वतोनिरु

यंभावंदर्शयेद्यस्यतंभावंसतुपश्यति तंचावतिसभूत्वासौतद्ग्रहःसमुपैतितं २९ ॥

18

णाद्धितस्मिन्ग्रहस्तद्ग्रहस्तदभिनिवेशइदमेवतत्त्वमितिसतंगृहीतारमुपैतितस्यात्मभावंनिगच्छतीत्यर्थः २९

धकंपुरुषतादात्म्यमापद्येत्यर्थः रक्षणप्रकारंप्रकटयति स्वेनेति साक्षादसाधारणरूपत्वेनतत्रैवनिष्ठामापद्यततोऽ 
न्यत्रप्रवृत्तिमुपासकस्यनिवारयतीत्यर्थः चतुर्थपादंव्याचष्टे तस्मिन्निति २९ ॥ ॥ ॥ 

सृष्टिर्वा लयो वा स्थितिर्वा तत्त्वमिति पौराणिकास्तदपि कल्पनामात्रं सतोः सतत्त्वोत्पत्त्याद्यभावस्य वक्ष्यमाणत्वादिति विवक्षित्वाह सृष्टिरित्यादिना यथोक्तकल्पनानामधिष्ठानं सूचयति सर्वे चेति उदात्तताश्चानुदात्तताश्च कल्पनाभेदा यावन्तो विद्यन्ते ते सर्वेऽपि प्रकृतात्मन्येव कल्पनावस्थायां कल्प्यन्ते नात्मनः कल्पितत्वं सर्वस्य कल्पितत्वेनाधिष्ठानत्वायोगादित्यर्थः प्राणादिश्लोकेषु प्राणशब्दार्थमाह प्राण इति तस्यैव बीजात्मनो विकारविशेषत्वादितरेषां न ततोऽत्यन्तभिन्नतेत्याह तत्कार्येति इति

प्राणः प्राज्ञो बीजात्मा तत्कार्यभेदा हीतरे स्थित्यन्ताः अन्ये च सर्वे लौकिकाः सर्वप्राणिपरिकल्पितभेदाः रज्ज्वामिव सर्पा

सृष्टिरिति सृष्टिविदो लय इति च तद्विदः स्थितिरिति स्थितिविदः सर्वे चेह तु सर्वदा २८

इयत्तच्छून्ये आत्मन्यात्मस्वरूपानिश्चयहेतोरविद्यया कल्पिता इति पिंडीकृतोऽर्थः प्राणादिश्लोकानां प्रत्येकं पदार्थव्याख्याने फल्गुप्रयोजनत्वाद्यत्नो न कृतः २८

मपदार्थं स्फुटयति अन्य इति कुलधर्मो ग्रामधर्मो देशधर्मश्चेति एते सर्वशब्देन गृह्यन्ते तेषामात्मनि तदज्ञानादेव कल्पितत्वे दृष्टान्तं स्पष्टयति रज्ज्वामिति आत्मनोऽधिष्ठानयोग्यत्वार्थं कल्पनाशून्यत्वमाह तच्छून्यमिति किमिति समुदायार्थः श्लोकानामुच्यते श्लोकान्तरेष्विव प्रत्येकं पदार्थव्याख्यानमेतेषु किं न स्यादित्याशंक्याह प्रत्येकमिति २८ ॥ ॥

मा·भा·टी·२ तत्वेनात्मवेदनोपायं सूचयति तत्वेनेति स्वप्नदृष्टवज्जाग्रद्दृश्यानां मिथ्यात्वसाधको दृश्यत्वादिहेतुरत्र युक्तिरित्युच्यते यथोक्तवि
१९ ज्ञानवान् वेदकिंकरो न भवति किंतु स एव वेदार्थं ब्रूते स एव वेदार्थो भवतीत्यर्थः विभागतो वेदार्थमाख्यानमभिनयति इदमिति
ज्ञानकांडं साक्षाद्ब्रह्मतत्त्वपरं कर्मकांडं तु साध्यसाधनसंबंधबोधनद्वारा परंपरया तस्मिन्पर्यवसितं सर्वे वेदा यत्पदमा

तत्वेन श्रुतितो युक्तितश्च सो विशंकितो वेदार्थं विभागतः कल्पयेत्कल्पयतीत्यर्थः इदमे
19 वपरं वाक्यमदोऽन्यपरमिति नत्वनध्यात्मविद्वेदार्थं तत्वेन ज्ञातुं शक्नोतीति तत्वतः नत्वन
ध्यात्मवित्किंचित्क्रियाफलमुपाश्नुत इति हि मानवं वचनं २० ॥ ३० ॥

मनंतीति श्रुतेरित्यर्थः आत्मविदो वेदार्थवित्त्वमुक्तं व्यनक्ति नहीति तदेव हि वेदांतार्थतत्त्वं यत्प्रत्यगात्मस्वरूपमत
श्चाध्यात्मविदेव याथात्म्येन तत्त्वज्ञाने प्रभवतीत्यर्थः उक्तेर्थे स्मृतिमुदाहरति नहीति क्रियाशब्देन प्रमाणमुच्य राम०
ते तेन तत्फलं तत्त्वज्ञानं अग्निहोत्रादिक्रियायाश्च बुद्धिशुद्धिद्वारा तस्मिन्पर्यवसानादित्यर्थः ३० ॥ ॥ १९

एतेनात्मत्रप्रवृत्तिनिरोधे हेतुरुक्तः तर्हि प्राणादीनामात्मवदेवतात्त्विकत्वप्रसङ्ग इत्याशंक्य कल्पितानामधिष्ठानातिरेकेणावस्तुत्वान्नैवमित्याह एतैरिति उक्तज्ञानस्तुत्यर्थमाह एवमिति पूर्वार्द्धं व्याकरोति एतैरिति कल्पितानामधिष्ठानातिरेकेणा

एतैरिति एतैः प्राणादिभिरात्मनोः पृथग्भूतैः पृथग्भावैर्भेदैर्वस्त्वात्मा रज्जुरिव सर्पादिकल्पनारूपैः पृथगेवेति लक्षितो भिन्न इति निश्चितो भवतीत्यर्थः विवेकिनां तु रज्ज्वामिव कल्पिताः सर्पादयो नात्मव्यतिरेकेण प्राणाद

एतैर्भेदैः पृथग्भावैः पृथगेवेति लक्षितः एवं योऽवेद तत्त्वेन कल्प्येत्सोऽविशङ्कितः १

यः संतीत्यभिप्रायः इदं सर्वं यदयमात्मेति श्रुतेः एवमात्मव्यतिरेकेणासत्त्वं रज्जुसर्पवदात्मनि कल्पितानामा
त्मानं च केवलं निर्विकल्पं यो वेद॥ ॥

सत्तास्फुरणयोरभावात् तद्द्वारेणात्मनि भेददर्शनमविवेकिनामस्तु तदन्येषां कथमुपलब्धिरित्याशंक्याह विवेकिनां त्विति प्राणादीनामात्मव्यतिरेकेणासत्त्वे प्रमाणमाह इदमिति उत्तरार्द्धं योजयति एवमिति॥ ॥

नेहनानास्तिकिंचनेत्यादयोवेदांताः द्वैतस्यवस्तुतोऽसत्वेऽस्मिन्नर्थेऽपिदर्शयति तमइति तमसिमंदांधकारेरज्ज्वाम
थिष्ठानेभुच्छिद्रमितियद्भ्रांत्याभातितन्निभंततुल्यंविवेकिभिर्विस्पष्टंदृष्टंतज्ज्ञानीवद्वंचचलमालक्षितेनाशप्रायंवर्त्ते



क्तेत्याह वेदांतेषु नेहनानास्तिकिंचन इंद्रोमायाभिःपुरुरूपईयते आत्मैवेदमग्रआसी
त् ब्रह्मैवेदमग्रआसीत् द्वितीयाद्वैभयंभवति नतुतद्द्वितीयमस्ति यत्रत्वस्यसर्वमात्मैवाभू
दित्यादिषुविचक्षणैर्निपुणान्तरवस्तुदर्शिभिः पंडितैरित्यर्थः तमःश्वभ्रनिभंदृष्टंवर्षबुद्बुद
सन्निभं नाशप्रायंसुखाद्धीनंनाशोत्तरमभावगमितिव्यासस्मृतेः ३१



मानकालेऽपितद्योग्यतासत्वान्नचद्वैतंकदाचिदपिसुखकरमुपलभ्यतेदुःखाक्रांतंतुदृश्यतेतच्चनाशग्रस्तंना
शादूर्ध्वमसत्वमेवापगच्छति नतर्हितस्यपरमार्थत्वंप्रमाणाभावादित्यर्थः ३१

याभिर्युक्तिभिरस्मिन् प्रकरणे द्वैतस्य मिथ्यात्वं कथ्यते तासां प्रमाणानुग्राहकत्वादनाभासत्वमवसेयमित्याह स्वप्नेति
श्लोकस्य तात्पर्यार्थमाह यदेतद्द्वैतस्येति असत्त्वे सत्त्ववत्प्रतिभानं कथमित्याशंक्य श्लोकाक्षराणि व्याचष्टे स्वप्नश्चेति प्र

यदेतद्द्वैतस्यासत्त्वमुक्तं युक्तितस्तदेतद्वेदान्तप्रमाणावगतमित्याह स्वप्नमायेति स्वप्नश्च माया च स्वप्नमा-
ये असद्वस्त्वात्मिके सत्ये सदसद्वस्त्वात्मिके इव लक्ष्येते अविवेकिभिः यथा च प्रसारितपण्यापणगृहप्रा-

स्वप्नमाये यथा दृष्टे गंधर्वनगरं यथा तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ३१

सादस्त्रीपुंजनपदव्यवहाराकीर्णमिव गंधर्वनगरं दृश्यमानमेव सदकस्मादभावतां गतं दृष्टं यथा च स्वप्नमा-
ये दृष्टे असद्रूपे तथा विश्वमिदं द्वैतं समस्तमसद्दृष्टं॥

सारितानि तत्र तत्र प्रकटतां प्रापितानि पण्यानि क्रयविक्रयद्रव्याणि येषामापणेषु हट्टेषु तेषु प्रसारितपण्यापणास्ते
च गृहाश्च प्रासादाश्च स्त्रीपुंजनपदाश्च तैर्व्यवहारास्तैराकीर्णमिति योजना दृष्टान्तत्रयमनूद्य दार्ष्टान्तिकमाह यथा
चेति गंधर्वनगरं चकारार्थः॥

मा॰भा॰टी॰२ द्वैताः सत्त्वमभ्युपगच्छंमेनं स्पष्टयति यत्रहीति द्वैतस्यासत्त्वेकमुत्पत्तिप्रलयौ न स्यातामित्याशंक्य किं द्वैतस्योत्पत्तौ किं वाऽद्वैत उत्पत्तिप्रलयोः
२१ स्येति आद्यविकल्पं दूषयति सतोहीति द्वितीयं प्रत्याह नापीति व्यावहारिकद्वैतांगीकारात्तस्यैवोत्पत्तिप्रलयावित्यर्थः

21

यत्र हि द्वैतमिव भवति यत्र त्वनानेव पश्यति आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वं एकमेवाद्वितीयं इदं सर्वं यदयमात्मा इत्यादिश्रुतिभ्यो द्वैतस्याः सत्त्वं सिद्धं सतोऽस्युत्पत्तिः प्रलयो वा स्यान्नासतः शशविषाणादेर्नाप्यद्वैतं उत्पद्यते प्रलीयते वा अद्वयं चोत्पत्तिप्रलयवच्चेति विप्रतिषिद्धं यस्तु पुनर्द्वैतसंव्यवहारः स रज्जुसर्पवदात्मनि प्राणादिलक्षणः कल्पित इत्युक्तं नहि मनोविकल्पनायाः रज्जुसर्पादिलक्षणायाः रज्ज्वां प्रलय उत्पत्तिर्वा न च मनसि रज्जुसर्पस्योत्पत्तिः प्रलयो वा ॥

कथाह यस्त्विति विमतं तत्त्वतो नोत्पत्तिप्रलयवान् कल्पितत्वात् रज्जुसर्पवदित्यत्र दृष्टांतासिद्धिमाशंक्य रज्जुसर्पस्य राम॰
२१ रज्ज्वामुत्पत्तिप्रलयौ मनसि वा द्वयोर्वेति विकल्प्य प्रथमं प्रत्याह नहीति रज्जुं पश्यतां सर्वेषामनुपलब्धिप्रसंगादित्यर्थः द्वितीयं दूषयति नचेति बहिरुपलब्धिविरोधादित्यर्थः ॥

प्रमाणयुक्तिभ्यां द्वैतमिथ्यात्वप्रसाधनेनाद्वैतमेव पारमार्थिकमिति स्थितेनिर्धारितमर्थं संगृह्णाति नेत्यादिना श्लोक
स्य तात्पर्यार्थमाह प्रकरणेति कोसौ प्रकरणार्थस्तस्य चासंग्रहे किं सिध्यति तदाह. यदेति व्यवहारमात्रस्याविद्यावि

प्रकरणार्थोपसंहारोर्थोयं श्लोकः ननिरोध इति यदा वितथं द्वैतमात्मैवैकः परमार्थतः सन् तदा इदं नि
ष्पन्नं भवति सर्वोयं लौकिक वैदिकव्यवहारोऽविद्याविषय एवेति तदा ननिरोधः निरोधनं निरोधः प्रल

ननिरोधो नचोत्पत्तिर्न बद्धो नच साधकः नमुमुक्षुर्न
वैमुक्त इत्येषा परमार्थता ३२ ॥ ३२ ॥

यः उत्पत्तिर्जननं बद्धः संसारी जीवः साधकः साधनान्मोक्षस्य मुमुक्षुर्मोचनार्थी मुक्तो विमुक्तबंधः उत्प
त्तिप्रलययोरभावाद्बद्धादयो न संतीत्येषा परमार्थता कथमुत्पत्तिप्रलययोरभाव इति उच्यते द्वैतस्यास
त्वात् ॥
यद्यसत्वेपि किं स्यादिति चेत्तदाह तदेति चतुर्थपादार्थमाह उत्पत्तीति उक्तमेवार्थं प्रश्नप्रतिवचनाभ्यां प्रपंचयति क
थमित्यादिना ॥

मा॰भा॰टी॰२ अद्वैतस्याप्रामाणिकत्वेपि कुतः शून्यवादी द्वैतस्य सत्वादित्याशंक्याह द्वैतस्येति नाप्रामाणिकोशून्यवादी उक्तोपचारा
२२ ज्वामारोपितसर्पादेः रज्जुरधिष्ठानं नहि निरधिष्ठानो भ्रमोस्ति तथा द्वैतकल्पनाया निरधिष्ठानयोगात्तदधिष्ठानत्वेनाद्वै
तमास्थेयमित्यंकारप्रकरणोपरि तत्तमेतत्प्रोधंकथमुद्भावयसीति सिद्धांतवाद्याह नैत्यादिना तत्र शून्यवादी समन्तात्तु सा
रेणाह दृष्टान्ताः संप्रतिपत्त्या चोदयति अद्वैतेति स्वमतं संमतस्येव दृष्टान्ततेत्यः नियमात्स्वसिद्धिमात्रेणापरं प्रतिबोधनस

द्वैतस्य चाभावात् न रज्जुसर्पादिविकल्पनाया निरास्पदत्वाऽनुपपत्तिरिति प्रयुक्तमेतत्कथमुज्जी
22 वयसीत्याह आह शून्यवादी रज्जुरपि सर्पविकल्पस्यास्पदभूता विकल्पितैवेति दृष्टान्तानुपपत्तिः
न विकल्पनास्पदेऽप्यविकल्पितस्याविकल्पितत्वादेव सत्त्वोपपत्तेः रज्जुसर्पवदसत्वमिति चेन्नैकां
तेनाविकल्पितत्वात्॥

भगवद्भ्रमबाधेपरिशिष्यमाणस्यावधेः सत्यतया रज्ज्वादेर्दृष्टत्वात् द्वैतभ्रमबाधसाक्षित
यास्फुरतश्चैतन्यस्याकल्पितत्वादेव सत्त्वाच्छून्यताप्रसक्तिरित्युत्तरमाह नेत्यादिना अद्वैतमसद्प्रामाणिकत्वाद्र राम॰
ज्जुसर्पवदिति तत्र दकल्पितत्वासिद्धिं शंकते रज्ज्विति रज्जुसर्पस्यासत्वेप्यातिविषयत्वं प्रयोजकमात्मनस्तु भ्रमसा २२
क्षित्वान्नियमेन भ्रमाविषयत्वान्नासत्वमित्युत्तरमाह नैकांतेनेति॥

ततीयं निरस्यति नचेति उभयतो मनो रज्जुलक्षणो न रज्जुसर्पस्योत्पत्तिप्रलययोर्युक्तो द्वयाधारत्वानुपलंभादित्यर्थः सर्पस्याधारं
रज्जुसर्पवत् द्वैतस्य मानसत्वाविरोधान्न तत्त्वतो ज...न्मविनाशौ दर्शयितुं शक्याविति दार्ष्टांतिकमाह तथेति द्वैत
तस्य न कुतश्चिन्नालिकौ जन्मविनाशाविति शेषः मानसत्वासिद्धिमाशंक्याह नहीति अन्वयव्यतिरेकाभ्यां द्वै
तं मनोविकल्पनामात्रमिति निगमयति अत इति नच मनो द्वैतस्य दर्शनमात्रे निमित्तमिति युक्तं भ्रमसिद्ध नेमनेमनसि =

नचोभयतो वा तथा मानसत्वाः विरोधात् द्वैतस्य न हि निर्यत्ने मनसि सुषुप्ते वा द्वैतं गृह्यतेऽत
तो मनोविकल्पनामात्रं द्वैतमिति सिद्धं तस्मात् सूक्तं द्वैतस्यासत्वान्निरोधाद्यभावः परमार्थत
इति यद्येवं द्वैताभावे शास्त्रव्यापारो नाद्वैते विरोधात् नचासत्यः द्वैतस्य वस्तुत्वे प्रमाणा
भावाच्छून्यवादप्रसंगः॥ ॥

स्याज्ञानसज्ञायां प्रमाणाभावादित्यभिप्रेत्य प्रकृतमुपसंहरति तस्मादिति निरोधाद्यभावस्य परमार्थ
त त्वेन तत्रैव शास्त्रव्यापाराद् द्वैते तद्व्यापारे तदभावबोधने व्याहतस्य भावबोधने व्यापारविरोधाद् द्वैतमप्रामाणि
कं प्राप्तमिति शंकते यद्येवमिति अद्वैतस्य प्रामाणिकत्वाभावे किं स्यादित्याशंक्याह तथा चेति॥ ॥ ॥

त्ममाविषयस्यात्मनोऽध्यासानुगततया स्फुरणमघटमानमित्याक्षिपति कथमिति स्वप्रकाशत्वेन स्वतो निर्विकल्पकस्फुर
णोपि सविकल्पकव्यवहारे समारोपितसंसृष्टाकारेणाक्षमविषयत्वमविरुद्धमित्याह सत्यमित्यादिना उक्तन्यायेनात्म
प्रतीतेः सिद्धत्वात्प्रतिपन्ने तस्मिन् दृष्टे तत्प्रतिषेधस्य स्फुरत्वेति फलितमाह यदाचेति न केवलमारोपितविशेषणो विशेष्य

कथं सुख्यहं दुःखी मूढो जातो मृतो जीर्णो देहवान् पण्या मिथ्यक्तोऽव्यक्तः कर्ता फली संयुक्तो वियुक्तः क्षी
णो वृद्धोऽहं ममैते इत्येवमादयः सर्वे आत्मन्यध्यारोप्यंते आत्मैतेष्वनुगतः सर्वत्राव्यभिचारात्तयथा
सर्पधारादिभेदेष्वनुरज्जुः यदा चैवं विशेष्यस्वरूपप्रत्ययस्य सिद्धत्वात्कर्तव्यत्वेशास्त्रेण अकृतकर्तृत्वं च।
शास्त्रकृतानुकारित्वेऽप्रमाणं यतोऽविद्याध्यारोपितसर्वविशेषप्रतिबंधादेवात्मनः स्वरूपेण
॥ नवस्थानं॥

स्यात्मनः स्वरूपस्फुरणस्य सिद्धत्वादेवं न शास्त्रेण कर्तव्यत्वमनुवादत्वेनाप्रामाण्यप्रसंगाच्चे
वमित्याह अद्वैतेति स्फुरणात्मनि दृष्टे तन्निषेधकत्वेपि शास्त्रस्य फलाभावादप्रामाण्यप्राप्तमित्याशंक्याह अवि
द्येति प्रतिषेधशास्त्रादपनीते प्रतिबंधे स्वरूपावस्थानं फलतीत्यर्थः॥

तृतीये निरस्यति नचेति उभयतो मनोरज्जुलक्षणो न रज्जुसर्पस्योत्पत्तिप्रलययोरुक्तौ द्वयाधारत्वानुपलंभादित्यर्थः
रज्जुसर्पवद्द्वैतस्य मानसत्वाविशेषान्न तत्त्वतो ज[illegible]न्मविनाशौ दृश्येते तु दृश्याविति दार्ष्टान्तिकमाह तथेति द्वैत
तस्य न कुतश्चिदात्मिको जन्मविनाशाविति शेषः मानसत्वासिद्धिमाशंक्याह नहीति अन्वयव्यतिरेकाभ्यां द्वै
तं मनोविकल्पनामात्रमिति निगमयति अतइति नच मनो द्वैतस्य दर्शनमात्रे निमित्तमितियुक्तं अमसिद्धं

नचोभयतो वा तथा मानसत्वाऽविशेषात् द्वैतस्य न हि निर्यते मनसि सुषुप्ते वा द्वैतं गृह्यते अ
तो मनोविकल्पनामात्रं द्वैतमिति सिद्धं तस्मात् सूक्तं द्वैतस्यासत्वान्निरोधाद्यभावः परमार्थत
इति यद्येवं द्वैताभावे शास्त्रव्यापारो नाऽद्वैते विरोधात् तथा च सत्यद्वैतस्य वस्तुत्वे प्रमाणा
भावाच्छून्यवादप्रसंगः ॥ ॥

स्याज्ञानसत्तायां प्रमाणाभावादित्यभिप्रेत्य प्रकृतमुपसंहरति तस्मादिति निरोधाद्यभावस्य परमार्था
त्वे तत्रैव शास्त्रव्यापारात् द्वैते तदभावात् तदभावबोधने व्याप्तस्य भावबोधने व्यापारविरोधाद्द्वैतमप्रामाणि
कं स्यादिति शंकते यद्येवमिति अद्वैतस्य प्रामाणिकत्वाभावे किं स्यादित्याशंक्याह तथा चेति॥ ॥ ॥

सर्पस्याधारा
नेमनेमनसि =
त

त्ममात्रविषयस्यात्मनोऽध्यासानुगततया स्फुरणमघटमानमित्याक्षिपति कथमिति स्वप्रकाशत्वेन स्वतो निर्विकल्पकस्फुरणोऽपि सविकल्पकव्यवहारे समारोपितसंसृष्टाकारेणाध्यासविषयत्वमविरुद्धमित्याह सत्यमित्यादिना उक्तन्यायेनात्मप्रतीतेः सिद्धत्वात्प्रतिपन्ने तस्मिन्नद्वैतप्रतिषेधस्य सुकरत्वेति फलितमाह यदा चेति न केवलमारोपितविशेषणो विशेष्य

कथं संसरत्यहं दुःखी मूढो जातो मृतो जीर्णो देहवान् पश्यामि व्यक्तोऽव्यक्तः कर्त्ता फली संयुक्तो वियुक्तः क्षीणो वृद्धोऽहं ममेत्येवमादयः सर्वे आत्मन्यध्यारोप्यन्ते आत्मैतेष्वनुगतः सर्वत्राव्यभिचारात् यथा सर्पधारादिभेदेषु रज्जुः यदा चैवं विशेष्यस्वरूपप्रत्ययस्य सिद्धत्वान्न कर्त्तव्यत्वं शास्त्रेण अकृतकर्त्तृत्वं च। शास्त्रं कृतानुकारित्वेऽप्रमाणं यतोऽविद्याध्यारोपितसुखित्वादिविशेषप्रतिबंधादेवात्मनः स्वरूपेण ॥ नवस्थानं ॥

स्यात्मनः स्वरूपस्फुरणस्य सिद्धत्वादेवं न शास्त्रेण कर्त्तव्यत्वमनुवादत्वेनाप्रामाण्यप्रसंगाच्चैवमित्याह अकृतेति स्फुरत्यात्मनि द्वैतनिषेधकत्वेऽपि शास्त्रस्य फलाभावादप्रामाण्यप्राप्तमित्याशंक्याह अविद्येति प्रतिषेधशास्त्रादपनीते प्रतिबंधे स्वरूपावस्थानं फलतीत्यर्थः ॥

अप्रामाणिकत्वहेतोरनैकांतिकत्वं दोषांतरमाह अविकल्पितेति नायं सर्पो रज्जुरेषेति सर्पाभावज्ञानपूर्वकपुरोवर्तिरज्जु त्वनिश्चयात्प्रागवस्थायां प्रामाणिकत्वाभावेपि सत्वेनाज्ञातो रज्ज्वंशोभ्युपगम्यते तथासदैव प्रामाणिकत्वाभावेपि सत्वेनात्मा भविष्यतीत्यर्थः आत्मनोः सत्वाभावे हेत्वंतरमाह विकल्पयितुश्चेति आत्मनो द्वैतभ्रमाधिष्ठानत्वेन संभावितत्वात् बाधसाक्षित्वेन परिशिष्टत्वात् एवं भ्रमोत्पत्तेः स्वतः सिद्धत्वाच्च प्रमाणाविषयत्वेपि नास्तिमन्यते त्युक्तं इदानीं प्रमिते धर्मि

अविकल्पितरज्ज्वंशवत् प्राक् सर्पाभावविज्ञानात् विकल्पयितुश्च प्राग्विकल्पनोत्पत्तेः सि
द्धत्वाभ्युपगमाद् सत्वानुपपत्तिः कथं पुनः स्वरूपे व्यापाराभावे शास्त्रस्य द्वैतविज्ञाननिवर्तक न
त्वं नैष दोषः रज्ज्वां सर्पादिवदात्मनि द्वैतस्याविद्याध्यस्तत्वात्॥ ५॥ ५॥

णि प्रतिषेधदर्शनादात्मनः प्रमितत्वे तत्र द्वैताभावप्रमापकं शास्त्रमयुक्तमिति शंकते कथमिति प्रतिपन्ने धर्मिणि प्रतिषेधात्प्रमिते प्रतिषेधस्य विशेषणावैफल्यादेवानभ्युपगमादात्मनश्च सर्वकल्पनास्वधिष्ठानाकारेणास्फुरणांगीकरणात्तस्मिन् प्रतिपन्ने द्वैतप्रतिषेधः संभवतीति परिहरति नैष दोष इति॥ ५॥ ५॥

मा० भा० टी० यदुक्तं निरोधाद्यभावस्य परमार्थतेति तदयुक्तं सामान्यविशेषात्मकं वस्तु नानारसमिति मते निरोधादेः सुसाध्यत्वादित्याशंक्या
२४ ह भावैरिति भावाः व्यावृत्ताः विशेषाः ते च व्यभिचारित्वादसन्तोऽनुस्यूतवद्रूपमनुवृत्तसामान्यं विशेषाकारैर्वस्तुभूतैः
सामान्याकारेण चैतावता हि द्वैतेनायमव्यावृत्ताननुगतरूपासत्ताचिदेकतानः सन्मात्रात्मैवमद्वैतमहिमाहात्म्यात्कल्प्यते न वस्तुनः

24

भावैरसद्भिरेवायमद्वयेन च विकल्पितः भावा
अप्यद्वयेनैव तस्मादद्वयता शिवा २३ ॥

सामान्यविशेषभावोऽस्ति परस्पराश्रयत्वादित्यर्थः विशेषाणामसत्त्वे कथं सत्त्वेन व्यवहारः स्यादित्याशंक्य सत्तादात्म्येन क
ल्पितत्वात्तेषां सत्त्वेन व्यवहारोपपत्तिरित्याह भावा इति अनुगतसत्ताकारेण कल्पिताः सत्त्वव्यवहारा भवन्तीति शे एम०
षः सामान्यविशेषभावस्य कल्पितत्वादखण्डैकरसत्वे वस्तुनः सिद्धे निरोधादेर्दुःसाधनत्वमुचितमिति फलितमाह त २४
स्मादिति॥ ॥०॥

निःशेषदुःखनिवृत्तिर्निरतिशयानंदावाप्तिश्च परं श्रेयो न स्वरूपावस्थानमित्याशंक्याह स्वरूपेति इति प्रसिद्धं मोक्षशास्त्रे
ष्विति शेषः द्वैतनिवर्त्तकत्वेनाशास्त्रस्य कारकत्वस्यादित्याशंक्याह कर्तृत्वादीति अकर्तृत्वादेः स्वाभाविकत्वादात्मनि स्फु
रत्स्फुरणमनुपपन्नमित्याशंक्य भ्रमविषयशुक्तीदमंशादेश्च स्वाभाविकोपि रजतादिभेदो दोषमाहात्म्यादयथावत्प्रति
भाति तथाः चित्स्वरूपस्याविद्याप्रभावादात्मनि स्फुरत्यपि कर्तृत्वाद्यध्यासविरोध्यकर्तृत्वादिरूपेणास्फुरणमविरुद्धमि

स्वरूपावस्थानं च श्रेय इति कर्तृत्वादिनिवर्त्तकं शास्त्रमात्मन्यकर्तृत्वादिप्रत्ययकरणेनेति नेति अस्थू
लादिवाक्यैरात्मस्वरूपवदकर्तृत्वाद्यपि कर्तृत्वादिभेदेषु नानाबुद्धेस्तिष्ठर्मः यद्यनुहृतः स्यान्त्वाध्यारोप्येत
कर्तृत्वादिलक्षणो विशेषः यथो स्वात्वगुणविशेषवत्यग्नौ दीनता तस्मान्निर्विशेष एवात्मनि कर्तृत्वा
दयो विशेषाः कल्पिताः यत्तेकर्तृत्वादिशास्त्रमात्मनस्तत्कर्तृत्वादिविशेषनिवृत्त्यर्थमेवेति सिद्धं सिद्धं तु

त्याह आत्मेति विपक्षे प्रमानुपपत्तिरित्याह यदीति उक्तमर्थं संक्षिपति ॥ निवर्त्तकत्वादित्यागमविदां सूत्रे ३२
गमयति अकर्तृत्वादेरकल्पितत्वमसिद्धमाशंक्य निरस्यति पत्विति अस्थूलमनणौ कांतरमित्यादिवाक्यं शास्त्रशब्दे
न गृह्यते उक्तेर्थे वृद्धाचार्यसंमतिमाह सिद्धंत्विति ब्रह्मणि पदानां च्युतस्वभावे पि सिद्धमेव शास्त्रस्य प्रामाण्यमभाव
बोधनव्युत्पन्नानां नञ्पदसंसृष्टैः स्थूलादिव्युत्पन्नपदैः स्वाभाविकद्वैतावबोधने नाध्यस्तनिवर्त्तकत्वादिति सूत्रार्थः ३२

मा·भा·टी· २५ एवं प्राणादिभावानां मिथ्यात्वं प्रसाध्य फलितं दर्शयन् एवं दीक्षराणां व्याख्यानमुपसंहरति अत इति अद्वयस्य परमार्थत्वात्तदात्मना कथमात्मा कल्पितः स्यादित्याशंक्य स्वरूपेण कल्पितस्यासंसृष्टरूपेण कल्पितत्वमिष्टमित्याह परमार्थसतेति अविद्यावशादिष्टा कल्पना न स्वभाववशादित्याह सदेति प्राणादीनामसत्त्वेन कथं व्यवहारगोचरत्वमित्याशंक्य तृतीयपादार्थमाह ते चेति कल्पितानां प्राणादिभावानामधिष्ठानसत्तया सत्त्वेन न सत्तावकल्प्यते तेषामधिष्ठानापेक्षानियमाभावादि

अतो ऽसद्भिरेव प्राणादिभावैरद्वयेन च परमार्थसता ऽत्मना रज्जुवत्सर्वविकल्पास्पदभूतेनायं स्वयमेवात्मा कल्पितः सदैकस्वभावो ऽपि सन् ते च प्राणादिभावा अप्यद्वयेनैव सतात्मना विकल्पिता न हि निरास्पदा काचित्कल्पनोपपद्यते ऽतः सर्वविकल्पनास्पदत्वात्स्वेनात्मना ऽद्वयस्याव्यभिचारात्कल्पनावस्थायामप्यद्वयता शिवा कल्पना एव त्वशिवाः रज्जुसर्पादिवत्त्रासादिकारिण्यो हि ताः अद्वयता ऽभया ऽतः सैव शिवा ३३

25

त्याशंक्याह नहीति सर्वविकल्पनानां साधिष्ठानैव दृश्यते न चासतो ऽधिष्ठानत्वमारोपितानुवेधाभावात्तदनुवेधाच्च सतो ऽधिष्ठानत्वमेष्टव्यं तथा च प्राणादिभावानां वस्तुतो ऽसत्त्वे ऽपि सति कल्पितानां सत्त्वेन व्यवहारसिद्धिरित्यर्थः चतुर्थपादार्थमाह अत इति स्वेनेति विशेषणं संसृष्टरूपेणाव्यभिचाराङ्गीकारार्थं कल्पनाया हि संदशायामेवाद्वयता शिवेत्याशंक्य कल्पनामात्रस्याशिवत्वमेवेत्याह कल्पनेति त्रासादीत्यादिशब्देन हर्षशोकादयो गृह्यन्ते यदुक्तमद्वयता शिवेति तदुपपादयति अद्वय राम· २५

श्लोकतात्पर्यं दर्शयति सर्वेति निरोधादिसर्वविशेषाभावोपलक्षितं वस्तु वस्तुभूतमिति एवं श्लोकार्थस्तस्य सामान्यविशेषात्म-
केवस्तुनि निर्विशेषाः नाप्रित्यनिरोधादेः सुसाध्यत्वादसत्त्वमाशंक्यते तेन तस्य साधनापेक्षायां तत्स्वदर्शनपरोयं श्लोक इत्य-
र्थः तत्र एवोद्गतान्यस्याशिंद्रांतावष्टंभेन आचष्टे यथेत्यादिना संस्रष्टरूपेणाकल्पितत्वे पि स्वरूपेणानारोपितत्वात् दृश्य-
दृश्यस्य व्यावहारिकसत्यत्वमुन्नेयं अविद्यमानैरपि मात्मा कल्प्यते न परमार्थतस्तेषां सत्त्वमिति शेषः कथं प्राणादीनां परमा-

सर्वं श्लोकार्थस्य हेतुमाह भावैरिति यथा रज्ज्वामसद्भिः सर्पधारादिभिरूपेण च रज्जुद्रव्येणासतां गंधस-
र्पद्वयधारादिकं योग्यमिति वा रज्जुद्रव्यमेव कल्प्यते एवं प्राणादिभिरनंतैरसद्भिरविद्यमानैः न परमार्थतो
नत्वप्रचलिते मनसि कल्पितुं द्वार उपलक्षयितुं शक्यते केनचिन्न चात्मनः प्रचलनमस्ति प्रचलितत्वेनोप-
लभ्यमानाभावान्न परमार्थतः संतः कल्पयितुं शक्याः॥

र्थतोऽसत्त्वमित्याशंक्यान्वयव्यतिरेकाभ्यां तेषां मनःस्पंदितमात्रप्रतीतेर्मिथ्यात्वं स्वप्रवदित्याह नहीति आत्मपरिणामत्वा-
त्मनश्चलनमंतरेण आदि भावानां परमार्थतः सत्त्वमित्याशंक्याह नचेति नहि विभोरात्मनो नभोवच्चलनं वास्तवमवकल्प्य-
ते न चलत्स्वभावे निरवयवस्य परिणामसंभावनेत्यर्थः प्राणादीनामात्मपरिणामत्वासंभवे फलितमाह प्रचलितस्येति
प्रगतं चलितं यस्य सततकूटस्थस्यैवात्मनो भासमाना भावाः न परमार्थतः संतो भवितुमर्हंते दृश्यत्वजडत्वादिना

श्रि

अध्यस्तमधिष्ठानरूपेणातत्त्वतो निरूप्यमाणमसदेव भवतीत्यत्र दृष्टान्तमाह यथेति प्रदीपप्रकाशेनाधिष्ठानमात्रतया समारोपितः सर्पो यदा निरूप्यते तदा नासौ तद्व्यतिरेकेण सिध्यति तथा जगदपीदं तदात्मस्वरूपेण निरूप्यमाणं नानात्वेन सिध्येदित्यर्थः एवं प्रथमपादं व्याख्याय द्वितीयपादं व्याचष्टे नापीति कदाचिदपीति कल्पनावस्थायां प्रागूर्ध्वं

यथा रज्जुस्वरूपेण प्रदीपप्रकाशेन निरूप्यमाणे न नानाभूतः कल्पितः सर्पोऽस्ति तद्वन्नापि स्वेन प्राणाद्यात्मनेदं विद्यते कदाचिदपि रज्जुसर्पवत्कल्पितत्वादेव तथान्योन्यं न पृथक्प्राणादि वस्तु यथाश्वान्महिषः पृथग्विद्यत एव अतोऽसत्त्वान्नापृथग्विद्यतेऽन्योन्यं परेण वा किंचिदित्येवं परमार्थतत्त्वमात्मविदो ब्राह्मणा विदुः अतोऽशिवहेतुत्वाभावादद्वयतैव शिवेत्यभिप्रायः ३४ ॥ ॥

26

चेत्यर्थः न पृथगित्यस्यार्थमाह तथेति पृथक्त्वस्यान्योन्याश्रयत्वेन दुर्वचनत्वाद्वैधर्म्योदाहरणं तु प्रातीतिकं पृथक्त्वमधिकृत्याविरुद्धं नोः पृथगित्यादि व्याकरोति अत इति द्वैतस्य प्राग्युक्तन्यायेनासत्त्वान्न तदन्योन्यं वा एम॰
परेणात्मना वा सहाऽपृथग्भूत्वा सेद्धुमर्हत्यतो दुर्निरूपत्वान्न किंचिद्द्वैतं नामास्तीति ब्रह्मविदां मतमित्यर्थः द्वैते हि २६
द्वैतं भयहेतुस्तदस्याभावे पुनरद्वैतमभयमेवेत्युपसंहरति अत इति ३४

ना
किंच किमिदं नानाभूतं द्वैतमात्मतादात्म्येन वा सिध्यति स्वातंत्र्येण वेति विवेक्तव्यं नाद्य इत्याह नात्मभावेनेति इदं हि नानाभूतं द्वैतं नात्मतादात्म्येन सेद्धुमर्हति जडाजडयोर्विरुद्धस्वभावयोस्तादात्म्यायोगात् भेदादिरूप्यात्मना तादात्म्ये च द्वैतस्य नानात्वासिद्धेरित्यर्थः द्वितीयं दूषयति न स्वेनेति स्वेन सत्तास्फूर्त्योरन्यानपेक्षत्वलक्षणात्स्वातंत्र्येणापि नेदं द्वैतं सेद्धुं पारयति तथा स्वातंत्र्ये सत्यात्मत्वप्रसंगादनात्मनो द्वैतत्वापातादित्यर्थः किंच किमिदं द्वैतमन्योन्यं पृथगपृथग्वेति विवेक्तव्यं नाद्य इत्याह न पृथगिति नहि किंचिदपि द्वैतं परस्परं पृथगेव सिध्यति पृथक्त्वस्य धर्मिप्रतियोगिरूपावच्छिन्नत्वेनान्योन्याश्रयत्वादिभि-

कुतश्चाद्वयता शिवा नात्मभावेनेति नानाभूतं पृथक्त्वमन्यस्यान्यस्य यत्र दृष्टं तत्राशिवं भवेत् न ह्यत्राद्वये परमा-

नात्मभावेन नानेदं न स्वेनापि कथंचन न पृथङ् नापृथक्किंचिदिति तत्त्वविदो विदुः ३४

र्थसत्यात्मनि प्राणादिसंसारजातमिदं जगदात्मभावेन परमार्थस्वरूपेण निरूप्यमाणं नानावस्त्वन्तरभूतं भवति

त्वयोर्दुर्वचनत्वादित्यर्थः नापि किंचिदन्योन्यमपृथगिति अतो वास्तवाकारेण सर्वथा निरूपणासहमेवं द्वैतमिति फलितमाह इति तत्त्वेति यदुक्तमद्वयता शिवेति तत्र हेत्वंतरोपमासपरत्वं श्लोकस्य दर्शयति कुतश्चेति तदेव स्फुटयति नानाभूतमित्यादिना नानाभूतमित्यस्य पर्यायोपादानं पृथक्त्वमिति तस्य भयकारणत्वं प्रकटयति अन्यस्येति तत्र व्याघ्रचोरादाविति यावत् तद्भयकारणं भेददर्शनमद्वये वस्तुनि नास्तीत्याह नहीति ॥

एवंसम्यग्ज्ञानाधिकारिणां साधनचतुष्टयसंपन्नमुक्त्वा तद्विषयं निरूपयति निर्विकल्प इति आत्मनश्चास्वरूपत्वशंकां वारयति. उपलब्ध इति हि शब्दद्योत्यमर्थमाह वेदांतेति सर्वविकल्पशून्यत्वमात्मनः स्फुटयितुं प्रपंचोपशम इति विशेषणमात्मनः अभावत्वबुद्धिं निराकर्तुं हेतुहेतुमद्भावेन पुनरुक्तिं विशेषणयोर्व्यासेधति अत एवेति सम्य

27

निर्विकल्पः सर्वविकल्पशून्यो ऽयमात्मा दृष्ट उपलब्धो वेदांतार्थतत्परैः प्रपंचोपशमः प्रपंचो द्वैतभेदविस्तारस्तस्योपशमो ऽभावो यस्मिन् स आत्मा प्रपंचोपशमः अत एवाद्वयः विगतदोषैरेव पंडितैर्वेदांतार्थतत्परैः संन्यासिभिः परमात्मा द्रष्टुं शक्यः नान्यै रागादिकलुषितचेतोभिः स्वपक्षपातदर्शनैर्लौकिकादिभिरित्यभिप्रायः ३५ ॥ ॥

ग्दर्शनाधिकारिणो दर्शितास्तानुपसंहरति विगतेति अनधिकारिणो दर्शयन् वैशेषिकवैनाशिकादिशास्त्राभिज्ञानामपि तदंतर्भावं सूचयति नान्यैरिति ३५ ॥श्रीकृष्णायनमः॥ ३५ ॥ ६ ॥ ६ ॥

किमितियथोक्तमद्वैतं सर्वेषां न प्रतीतिगोचरतामाचरतीत्याशंक्याह वीतेति रागादिप्रतिबंधविधुराणां यथोक्तमद्वैतदर्शनं न सर्वेषामित्यर्थः श्लोकस्य तात्पर्यमाह तदेतदिति स्तुतिश्चैतदुपायप्रवृत्तावुपकरोतीति शेषः आदिपदेन सम्यग्दर्शनप्र

तदेतत्सम्यग्दर्शनं स्तूयते वीतरागभयद्वेषक्रोधादिदोषवर्जितैः सर्वदा मुनिभि

वीतरागभयक्रोधैर्मुनिभिर्वेदपारगैः निर्विकल्पो ह्ययं दृष्टः प्रपंचोपशमोऽद्वयः ३५

र्मननशीलैर्विवेकिभिर्वेदपारगैरवगतवेदांतार्थतत्त्वैर्ज्ञानिभिः॥ १ ॥ २ ॥

तिबंधकाः सर्वे दोषाः संगृह्यंते रागादिविमोकोपदेशादिरनधिकारिणामपि संभवत्यतो विशिनष्टि सर्वदेति सत रागादिव्यावृत्तौ विवेकं हेतुं प्रपंचयति मुनिभिरिति विवेके च परदृष्टक्षेत्रीक्ष्यतात्पर्यं स च परिज्ञानं कारणमित्याह वेदेति॥ ॥

मा·भा·टी· २८

ननु परापरदेवतयोः स्तुतिपूर्वकप्रणामस्य श्राद्धादिक्रियायाश्च कर्तव्यतया प्रतिबंधात्कथं विदुषो जडवदाचरणमिति तत्राह निः
स्तुतिरिति तथापि जीवतां कापि स्यात्तव्यत्वादाश्रयमुद्दिश्य प्रवृत्तेरवश्यकत्वात् कुतो जडसादृश्यमित्याशंक्याह चलेति चलं

कयाचर्यया लोकमाचरेदित्याह निःस्तुतिरिति स्तुतिनमस्कारादिसर्वकर्मवर्जि

निःस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् २७

28

तः त्यक्तसर्वबाह्यैषणः प्रतिपन्नपरमहंसपारिव्राज्य इत्यभिप्रायः॥ ॥

चाचलं च चलाचले नैनिकेतो यस्याश्रयः सततं चेति यावत् तथापि कौपीनाच्छादनाशनपानादिदेहस्थितिप्रयोजकापेक्षया राम०
प्रवृत्तिध्रौव्यान्न विदुषो जडतुल्यतेत्याशंक्याह यतिरिति आकांक्षापूर्वकं पूर्वोक्तहंसादीनाचष्टे कपेत्यादिना वर्णा २८
श्रमाभिमानवतस्तत्कर्मस्ववर्तमानस्य कथमिदं विशेषणमित्याशंक्याह त्यक्तेति॥

मिथ्याज्ञानप्रपंचयसंस्काराद्द्वैतं तार्थतात्पर्यवतां पंडितानामपि नाद्वैते प्रत्ययदार्ढ्यं सिध्यतीत्याह तस्मादिति शास्त्रादद्वैतमवगम्य स्मृतिसंततिं कुर्वतो लोकानुवर्त्तने विधिनियममाह अद्वैतमिति तस्मादित्यस्यार्थमाह यस्मादिति एवमिति निर्विकल्पादिपरामर्शः विदित्वा शास्त्रतोऽवगम्येत्यर्थः अद्वैतावगतिदार्ढ्यार्थं स्मृतिसंततिकर्त्तव्यतायां नियमविधिमभ्यनुजानाति अद्वैतमनुगतिदार्ढ्या

तस्मादिति यस्मात्सर्वानर्थप्रशमरूपत्वादद्वयं शिवं अभयमत एवं विदित्वा एनमद्वैते स्मृतिं योजयेदद्वैतावगमेनैव स्मृतिं कुर्यादित्यर्थः तच्चाद्वैतमवगम्याहमस्मि परं ब्रह्मेति विदित्वाऽशनायाद्यतीतं साक्षादपरोक्षादजमात्मानं सर्वलो

तस्मादेवं विदित्वैनमद्वैते योजयेत्स्मृतिं अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत् ३६॥

कव्यवहारातीतः जडवल्लोकमाचरेत् अप्रख्यापयन्नात्मानमहमेवंविध इत्यभिप्रायः ३६ ॥ ५ ॥ ७ ॥

यं स्मृतिसंततिकर्त्तव्यतायां नियमविधिमभ्यनुजानाति अद्वैतमिति अद्वैतमित्यादि उत्तरार्द्धं विभजते नचेति जडसदृशस्सक र्वेलोकाचरणं अबुद्धिपूर्वकारित्वादित्याशंक्याह सर्वलोकेति लौकिकव्यवहारातीतत्वविदुषो जडवदाचरणं कीदृग्मित्यपेक्षा यां चतुर्थपादमन्यपरतात्पर्यमाह जडवदिति एवंविधोऽहमित्यात्मानं विद्यान्भिज्ञादिभिरप्रख्यापयन् जडवदेव विद्वान् लोकमाच

अहमेवपरंब्रह्मनमत्तोन्यदस्तिकिंचिदितिस्मृतिसंततिकरणमपिनकालविशेषनियतंकिंतुनैरंतर्येणकर्त्तव्यमित्याहतत्वमिति आध्यात्मिकंशरीरादिकल्पितंतत्वमधिष्ठानमात्रंदृष्ट्वाबाह्यतोदेहाद्बहिरवस्थितंपृथिव्यादिचकल्पितत्वेनावस्तुत्वादधिष्ठानमात्रमेवेत्यनुभूयस्वयमपिद्रष्टापरमार्थवस्तुस्वभावमापन्नः तत्रैवासक्तचेताः बाह्येभ्योविषयेभ्योव्यावृत्तबुद्धिस्तस्मिन्नेवतत्वेपरमार्थभूतेप्रतिष्ठितस्तद्दर्शननिष्ठःस्यादित्यर्थः पृथिव्यादेर्देहादेश्चप्रत्येकंपरमार्थत्वसंभवेकथमद्वैतनिष्ठासिद्ध्येदित्या-



तत्वेति बाह्यंपृथिव्यादितत्वमाध्यात्मिकंचदेहादिलक्षणंचरज्जुसर्पादिवत्वप्रमाणादिवज्ञासत् वाचारंभणंविकारीनामधेयमित्यादिश्रुतेः आत्माचसबाह्याभ्यंतरोह्यजः अपूर्वोऽनपरोऽनंतरोऽबाह्यः कृत्स्नः आकाशवत्सर्व-

तत्वमाध्यात्मिकंदृष्ट्वातत्वंदृष्ट्वातुबाह्यतः तत्वीभूतस्तदारामस्तत्वादप्रच्युतोभवेत् ३८

गतः सूक्ष्मोऽचलोनिर्गुणोनिष्कलोनिःक्रियः तत्सत्यंसआत्मातत्वमसीतिश्रुतेः॥ ॥ ॥

शंकांव्याचष्टे बाह्यमित्यादिनाकिंतदुभयोस्तत्वंतदाह रज्जुसर्पादिवदिति उक्तस्यविकारजातस्यासत्वेप्रमाणमाह
वाचारंभणमिति द्रष्टुरात्मनोपिदृश्यप्रतियोगित्वाच्चतुर्थ्यंवाचारंभणत्वमित्याशंक्याह आत्माचेति भवतुपरस्मात्तेन 
त्तत्तदागमवचननिर्दिष्टादुक्तलक्षणत्वंतथापिद्रष्टुरात्मनोनयथोक्तरूपत्वमित्याशंक्याह तत्सत्यमिति विशेषणानितुआ 
चीनानितत्तदागमोपात्तानिअपुनरुक्तानि॥ ॥मांडूक्योपनिषद्वार्त्तिकेवैतथ्याख्यंद्वितीयंप्रकरणं॥ २

पारमहंस्यपारिव्राज्यं प्रतिपत्तुमशक्यमप्रामाणिकत्वादिति चेन्नैवं श्रुतिस्मृतिसिद्धत्वादित्याह शान्तमिति विदित्वेत्यापातिकं वेदनं व्यु
त्थानहेतुत्वेनोच्यते तस्मिन्नेव परस्मिन्वस्तुनि विषयान्तरेभ्यो व्यावृत्ता बुद्धिर्येषामिति तथा तदेव परं वस्त्वात्मा निरुपचरितं स्वरूपं ये
षां ते तथोच्यन्ते तस्मिन्नेव परस्मिन्नात्मनि निष्ठा निश्चयेन स्थितिर्येषां ते तथेत्याह तन्निष्ठा इति तदेवात्मभूतं परं वस्तु परमयनं पर
गतिर्येषां ते तथेत्याह तत्परायणा इति आदिशब्देन सर्वकर्माणि संन्यस्येत्यादिवाक्यं गृह्यते कदा पुनश्चलो देहो विदुषो निकेतो भ

३० एवं च एनं चैतमात्मानं विदित्वेत्यादिश्रुतेः तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणा इत्यादिस्मृतेश्च चलाचले
ति चलं शरीरं प्रतीक्षणमन्यथाभावात् अचलमात्मतत्त्वं यदा कदाचिद्भोजनादिव्यवहारनिमित्तमाकाशवदच
लं स्वरूपमात्मतत्त्वमात्मनो निकेतं आश्रयं आत्मस्थितिं विस्मृत्य अहमिति मन्यते यदा तदा चलो देहो निकेतो
यस्य सोऽयमेवं चलाचलनिकेतो विद्वान्न पुनर्बाह्यविषयाश्रयः स च यादृच्छिको भवेत् यदृच्छाप्राप्तकौपीना
((छादनग्रासमात्रदेहस्थितिरित्यर्थः ३७

वतीत्याह यदेति अविवक्षिते हि कालविशेषे विवक्षितं व्यवहारं निमित्तीकृत्य
त्मस्थितिमुक्तविशेषणवतीं विस्मृत्याहंकारममकारपरवशो यदा विद्वान्वर्तते तदेति योजना स्वभावतस्त्वचलमात्मस्वरू
पमेवास्य निकेतनं चलं पुनः शरीरमुपदर्शितविस्मरणद्वारेणेति निगमयति सोऽयमिति अविदुषो विदुषो वार्थक्यावर्त्यकीर्त्त
यति न पुनरिति चतुर्थपादार्थमाह स चेति ३८